# PREFACE.

IT affords us immense pleasure to bring to the notice of all lovers of Sanskrit literature this hitherto unpublished and excellent commentary on the immortal Bhagavad Gitá. Numerous have been the commentaries on this divine poem which have seen the light of day. When the Gúdhârtha Dipikâ of Madhusûdana Saraswati was published it was considered to embody all that could be said in elucidation of the celestial text. But a perusal of this commentary will show how much still remained to be said and how Madhusûdana Saraswati himself has misconstrued some of the passages. This commentary is valuable not only on account of its exceeding rarity, only one manuscript being available in spite of all our search for the past two years, but also on account of its excellence and impartiality. The author is one Venkaṭanàtha of whom nothing definite is known. Dharmarâjâdhvari the author of Vedântaparibhâsha speaks of one Venkatanàtha as his guru in the following sloka.

श्रीमद्वेङ्कटनाथाख्यान्वेलाङ्गुडिनिवासिनः ।
जगद्गुरूनहं वन्दे सर्वतन्त्रप्रवर्तकान् ॥

If we infer from this that the author of this commentary was the guru of Dharmarâjâdhvari we meet

with a difficulty. Dharmarâjâdhvari says in the following sloka that his paramaguru was called Nṛsimha whereas our commentator states that he is the desciple of one Râmabrahmânanda Tirtha otherwise known as Abhinava Ṣankarâchârya.

यदन्तेवासिपञ्चास्यैर्निरस्ता भेदिवारणाः ।
तं प्रणौमि नृसिंहाख्यं यतीन्द्रं परमं गुरुम् ॥

Hence it appears these two personages cannot be the same. Nor are we able to trace the identity of this Venkatanâtha through his other works. It is clear from this commentary that he has written three works besides this viz., Advaitavajrapanjara reference to which is found herein very often, Mantrasârasudhânidhi referred to in page 427 and a commentary on the Taittiriya Upanishad referred to in page 461. It is a pity none of these works is now available. If they are lost for ever we can but say that it is a great calamity to the Sanskrit literature. A perusal of this commentary clearly shows how very learned the author was besides being a very impartial critic. He spares none of his predecessors. Râmânuja, Mâdhva, Ṣridhara, Madhusûdana Saraswati. the author of the Paiṣâcha Bhâshya and another whom he calls as Navina or the latest commentator—all these are mercilessly criticised whenever they go astray while they are given their due meed of praise whenever they deserve the same. It is the purpose of the commentator to show that the advaitic interpretation in accordance with the Bhashya of Ṣri

Sankarâchârya is the only correct interpretation for the Gîtâ and accordingly he misses no opportunity to slash with his pen all his opponents whoever they may be. He has a very high regard for Srî Sankara Bhagavatpâda and when he finds that he has interpreted the same mantra in two different ways in the Upanishad and in the Gîtâ he tries his best to reconcile the two interpretations and begs pardon of the learned for his *avinaya* (vide page 97). In the second chapter he exhibits his learning in full and we are convinced that he was a personality of no mean intellect. He has rightly named the commentary as Brahmânandagiri, for it affords us supreme pleasure to read it and to follow his arguments which though learned are expressed in very simple and sweet language. He could not put up with text-torturing and when he finds Mâdhvachârya an adept in that art, he gets beyond himself and deplores the fate of the Vedas and the Gîtâ which has placed them in his hands to be tortured thus (vide page 143). His interpretations are always direct to the point and in consonance with Advaita. In short he should be studied to be fully appreciated.

This precious commentary would have shared the fate of the other works of this author but for the exertions of Brahmasri S. Subrahmanya Sastrigal of Tanjore He it was who gave us a well written copy of this and directed our attention to its excellence. When it was being printed it was found that there was no commentary for eleven slokas (slokas 21—31) in the Tenth

Chapter and for the last eight slokas in the Eighteenth Chapter. In the course of our vigorous search for another manuscript we came across one at the Tanjore Palace Library which was marked erroneously in Mr. Burnell's Catalogue as a commentary by Anandagiri. Evidently he mistook the name of the commentary viz., Brahmânandagiri for that of the author. On closer examination we found that Pandit Subrahmania Sastrigal's Mss. should have been copied from the Mss. in the Palace Library, for all the mistakes and omissions contained in the one was found in the other also. So, practically we had only one manuscript to go by and the Palace Library Mss. which consisted of fairly well preserved palm leaves was wanting in the last leaf which contained the last eight slokas of the Eighteenth Chapter. Fortunately the Gitâ proper ends with sloka sixty six and the missing slokas are only a portion of the Phalaṣruti which does not matter much. As for the eleven slokas missing in the Tenth Chapter it is very doubtful if the author ever wrote a commentary on them, for we find in the Palace Library Mss. space for writing only the text of these slokas left blank. Evidently the author did not find anything worth commenting upon in them and he simply skipped over them. In this edition we have filled up these gaps by substituting the commentary of Madhusûdana Saraswati which is the next best available. We have given the same within quotations (pp. 391—395 and 591—595.)

Our thanks are further due to Pandit S. Subrahmanya Sastrigal for his hearty co-operation in editing this work. His disinterested labours in the field of Sanskrit literature are too numerous to be mentioned here and we do not think he has done a greater service to it than by bringing this work to our notice. In conclusion we feel that the Sri Vani Vilas Press can justly feel proud of its existence by being enabled to publish such rare and valuable works. If all lovers of Sanskrit agree with us in finding this work unique and interesting it will be ample reward for our labours.

*T. K. Balasubrahmanyam.*

॥ श्रीः ॥

# ॥ अध्यायसूची ॥



॥ श्रीः ॥

# ॥ श्रीमद्भगवद्गीता ॥

---

पार्थस्येवात्मगीताहृदयमुपदिशन्यो ममापार्थभावं
प्रव्याख्याहं धनित्वं वितनु कृतिमिहार्भाप्स्मितं प्राप्स्यसीति ।
सानन्दं संदिदेश स्फुरतु स पुरतः सान्द्रजीमूतधामा
श्रीमानद्वैतभूमा मम परमगुरुः श्रीयशोदाकिशोरः ॥ १ ॥

श्रीमद्रामब्रह्मश्रीचरणस्मरणपरिणतस्फुरणः ।
भगवदुपदिष्टगीताभावं विवरीतुमारभे सोऽहम् ॥ २ ॥

व्याख्यातारः कति न कृतिनः सन्ति गीतासु किं तै-
र्व्याख्यास्येऽहं यदुकुलपतिश्रीमुखाब्जोपदिष्टम् ।
भावं तावच्छृणुत भगवत्पादभाष्योपनीत-
ब्रह्माद्वैतामृतरसपरिस्यन्दिसंदर्भगर्भम् ॥ ३ ॥

सद्यः परब्रह्मरसास्वादो यैरभिकाङ्क्षितः ।
ब्रह्मानन्दगिरिव्याख्या भाव्यतां तैरियं मुहुः ॥ ४ ॥

जातासि त्वं मुरहरमुखाज्जाह्नवी तस्य पादा-
त्सर्वानभ्युद्धरति भवती सा तु मग्नान्विधत्ते ।
प्रत्यग्ब्रह्मामृतरसनिधिं प्राप्य विश्राम्यसि त्वं
मातर्गीते जडनिधिमियं माति न त्वत्प्रभावः ॥ ५ ॥

तत्र तावद्भगवान्बादरायणः श्रीकृष्णार्जुनसंवादरूपं गीताशास्त्र-मवतारयितुकामस्तत्प्रस्तावनार्थत्वेन कुरुपाण्डवयुद्धसंनाहं निरूपयि-तुमुपोद्धातत्वेन प्रथमतः संजयं प्रति धृतराष्ट्रप्रश्नमुपक्षिपति—

**धृतराष्ट्र उवाच—**

**धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।**
**मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥**

हे संजय, मामकाः पाण्डवाश्च किमकुर्वतेति प्रथममन्वयः। व्या-सप्रसादलब्धदिव्यचक्षुषा सम्यग्जयति उत्कर्षेण वर्तत इति संजयः; तादृशस्य तव न किंचिदविदितमस्ति; अतो मत्पुत्रेषु पाण्डवेषु च यद्यद्वृत्तम्, तत्सर्वं वक्तुमर्हस्त्वमिति हेतुगर्भमिदं संबोधनम्। मामकाः पाण्डवाश्चेति स्वकीयेभ्यः पाण्डवानां पृथङ्निर्देशेन तेषु ममकाराभावोक्तेर्दुर्योधनादीनां जयः पाण्डवानां पराजयश्च स्वाभि-मतोऽर्थः प्रदर्शितः। तदेवोपपादयति— धर्मक्षेत्र इति। धर्मस्य क्षेत्रं जन्मस्थानं यत्कुरुक्षेत्रं तस्मिन्युयुत्सव एव सन्तः समवेता इत्युत्तरार्धगतैवकारेण सहान्वयः। अत्र धर्मक्षेत्र इत्यनेन– विषदा-नलाक्षागृहदहनकपटराज्यग्रहणाद्यधर्ममार्गेण स्वपुत्रैर्बहुशः क्लेशिता अपि पाण्डवाः स्वयमिदानीं दुर्योधनादिषु तथाविधमधर्म्यं कर्म किंचिन्न करिष्यन्ति, धर्मक्षेत्रे तादृशाधर्ममार्गस्यासंभावितत्वादिति सूचितम्। तेन च स्वपुत्राणां प्राक्तनदौष्ट्यप्रयुक्ततथाविधबाधकाभावः प्रदर्शितः। कुरुक्षेत्र इत्यनेन तु– लोके सर्वोऽपि स्वक्षेत्रे प्रबलः; इदं तु कुरुक्षेत्रं न तु पाण्डवक्षेत्रम्; अतोऽत्र कुरूणामेव प्राबल्य-

मिति साधकमुक्तम् । समवेता इत्यनेन च समुदायापरपर्यायं समवायं प्राप्ता इत्यर्थकेन समाक्षौहिणीसमुदायरूपात्पाण्डवबलादेकादशाक्षौहिणीसमुदायस्याधिक्येन ततोऽपि स्वपुत्राणां जय इति सूचितम्। युयुत्सव इत्यनेन—महाभिमानी दुर्योधनः पाण्डववत्क्षत्रधर्मानुचितभिक्षाचर्यादिहीनवृत्तिं न सहते, किं तु समये युद्धमेव चिकीर्षति; अतो युयुत्साख्यपु[illegible]कारक[illegible] [illegible]माधनमपि स्वपुत्रासाधारणमिति [illegible]ध्वनितम् । [illegible] [illegible]ादयश्चेत्यनुक्त्वा मामकाः पाण्डवाश्चेत्युक्त्येदं सूचितम्— मदीय [illegible]यं म[illegible] एवार्हन्ति, न तु मदनुजस्तत्पुत्रा वा; ततः परद्रव्यार्थं पाण्ड[illegible] कथं युयुत्सति तेष्वन्याय इति। एवमस्य श्लोकस्य लोकदृष्ट्या प्रतीयमानः प्रकृतकथोपोद्घातो धृतराष्ट्रप्रश्नरूपोऽर्थः कथितः । अथान्यस्तात्त्विकार्थोऽस्ति । यथा हि रामायणप्रवृत्त्युपोद्घातभूतस्य 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्' इति श्लोकस्याग्रिमकथोपोद्घातभूताद्वाल्मीकिकृतव्याधशापरूपात्प्रकृतार्थादन्यो रावणसंहारकरघुनाथमहिमवर्णनरूपस्तात्त्विकोऽर्थः, तथा धृतराष्ट्रप्रश्नरूपात्प्रकृतार्थादन्यो भगवद्गीतामहिमवर्णनरूपस्तात्त्विकार्थो युज्यते । तमेनं दर्शयामः— मामकाः पाण्डवाश्च किमकुर्वतेति पूर्ववदेव प्रथममन्वयः । किमित्येतत्कुत्सायामाश्चर्ये च वर्तते, उभयत्रापि लोके प्रयोगात् । तत्र कौरवपक्षे मामकाः किमकुर्वतेति कुत्सितमकुर्वन्नित्यर्थः । पाण्डवपक्षे त्वाश्चर्यमकुर्वन्नित्यर्थः । तत्र कौरवपक्षे तावदुच्यते—धर्मक्षेत्र इति । धर्मावतारत्वाद्युधिष्ठिरो धर्मः, तदुपलक्षिताः पाण्डवाः;

तेषां क्षेत्रं शरीरं कृष्णः, 'मम प्राणा हि पाण्डवाः' इति भगवत्प्राणत्वेनोक्तानां पाण्डवानां भगवदन्तर्वर्तित्वावश्यंभावेन भगवतः पाण्डवशरीरत्वाविष्करणात्। तदेव श्रीकृष्णाख्यं धर्मक्षेत्रं कुरुक्षेत्रम्, देवयजनस्थानत्वात्। 'यज्ञेन यज्ञमयजन्त देवाः' इति भगवान्देवयजनस्थानत्वेन श्रुतः। तथा कुरुक्षेत्रमपि, 'यदनु कुरुक्षेत्रं देवानां देवयजनम्' इति जाबालश्रुतेः, 'कुरुक्षेत्रं वै देवयजनम्' इति शतपथश्रुतेश्च। तस्मिन्कुरुक्षेत्रे युयुत्सव एव सन्तः समवेता मामका इति संबन्धः। कृष्णशरीरान्तर्गततदीयप्राणभूताः पाण्डवास्तच्छरीरभूतं कृष्णमपहाय योद्धमशक्या इति पाण्डवैः सह युयुत्सवः कौरवाः कृष्णेनैव युयुत्सवः संपन्नाः। ते च तथाभूताः सन्तस्तत्रैव श्रीकृष्णाख्ये कुरुक्षेत्रे समवेता अपृथग्भावेन संबद्धा निलीनाः, 'अमी च त्वां धृतराष्ट्रस्य पुत्राः' इति प्रस्तुत्य 'यथा प्रदीप्तं ज्वलनं पतंगा विशन्ति नाशाय समृद्धवेगाः। तथैव नाशाय विशन्ति' इत्यादिविश्वरूपाध्यायोक्तरीत्या भगवति प्रविष्टा इति यावत्। एतादृशा मामकाः कुत्सितमेवाकुर्वन्नित्यर्थः। मामका इत्यनेन ममान्धस्य पुत्रा दुर्योधनादयोऽप्यन्धा एव; ततस्तेषामात्मनाशमविज्ञाय ज्वलनपतंगन्यायेन भगवति विलयो युक्त इति व्यज्यते। अत्र कौरवाणां भगवति विलयप्रदर्शनेन 'मयैवैते निहताः पूर्वम्' इति श्लोकार्थो दर्शितः। तेन च बहुमेनाबलाढ्याः कथं नष्टा इति शङ्का निरस्ता, भगवद्बलस्य सर्वबलापवादित्वात्। कः पुनः पाण्डवैः सह युयुत्सतः कुरून्निहन्तुं भगवतः संबन्ध इति शङ्कानिरासाय भगवतः पाण्डवानां च शरीरशरीरिभावं दर्शयितुं

धर्मक्षेत्र इत्युक्तम् । तस्यैव कुरुक्षेत्रत्वनिरूपणेन कुरुक्षेत्रे कुरवो बलिष्ठा इत्याशा निरस्ता, भगवत एव कुरुक्षेत्रत्वे तस्यापि प्रतिकूलत्वात् । युयुत्सापुरुषकारस्तु दुर्योधने व्यभिचरित इति 'दृष्ट्वा तु पाण्डवानीकम्' इत्यग्रिमश्लोक एव स्फुटीभविष्यति । मामका एव राज्यार्हा इति महदान्ध्यम् । जात्यन्धतया राजपदानर्हमपि ज्येष्ठतास्नेहेन राजपदे निधाय सर्वमपि राज्यनिर्वाहं कृतवतः पाण्डोः पुत्रेषु पाण्डुमर्यादयैव पालयितव्येषु, यदा स्वयं तेभ्यो विभज्य राज्यं दत्त्वा कपटेनापहृत्य पुनस्तैस्तद्याचितः पञ्चग्राममात्रमन्ततः सूच्यग्रभूमिमपि युद्धं विना न दातुमियेष, तदा को नाम पाण्डवेष्वन्यायो यत्र तैर्योद्धव्यमिति स्पष्टम् । एवं च प्रकृतार्थव्याख्यानसमये यद्धृतराष्ट्रेण स्वपुत्रोत्कर्षकारणमुक्तं तत्सर्वं निरस्तमिति ध्येयम् । सोऽयं कौरवपक्षेऽर्थः । अथ पाण्डवपक्षे— तत्र धर्मक्षेत्रे कुरुक्षेत्र इति पूर्ववदेव व्याख्येयम् । तादृशे श्रीकृष्णे समवेताः सन्तो युयुत्सव इति यथाश्रुत एवान्वयः । समवेताः समवायसंबन्धं प्राप्ता इत्यर्थः । अयुतसिद्धयोः संबन्धः समवायः । अयुतसिद्धिश्च द्वयोरेकस्यापराश्रयनियमः । पाण्डवाश्च भगवत्प्राणभूताः स्वशरीरभूतं भगवन्तमाश्रित्यैवावतिष्ठन्त इति समवेतपदस्वारस्यम् । एवंभूता युयुत्सव एव च सन्तः पाण्डवाः किमाश्चर्यमकुर्वतेति योजना । युयुत्सया प्रवृत्तानां हि सार्वभौमपदलाभो युज्यते, न तु सार्वभौमादिब्रह्मानन्दान्ता यदीयपरमानन्दसागरशीकरास्तादृशज्ञानलाभस्तेषामस्ति । अत्र पुनरर्जुनो युयुत्सयैव प्रवृत्तः स्वजनं कथं हनिष्यामीति मोहेन श्रीकृष्णमुपसद्य तदुपदिष्टगीतामृत

ज्ञननिरञ्जनः परं तत्त्वमधिगत्य सद्य एव युद्धमोहेन संसार-
मोहमपि विधूतवानित्यतः काचान्वेषिणो दिव्यमणिलाभ इव
युयुत्सोरर्जुनस्य तत्त्वज्ञानलाभोऽत्यन्तविचित्र इति भावः । पाण्डवा
इत्यनेन— परिशुद्धस्वभावो ह्यर्थः पाण्डुः ; तस्य पुत्रा अपि तथै-
वेति तेषां भगवन्निष्ठा तत्प्रसादसमासादितैहिकामुष्मिकश्रेयःसंपत्तिश्च
युज्यत इति व्यज्यते । संजयेति च संबोधयन्नस्मिन्नर्थे 'यत्र योगेश्वरः
कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम'
इति वदन्भवानेव साक्षीति दर्शयति । एवं च युद्धमोहापनय-
नकामनयार्जुन इव अन्योऽपि यः कश्चिद्येन केनापि कामेन भगव-
न्तमवष्टभ्य तदुपदिष्टगीतापरिनिष्ठितः कृतकृत्यो भवतीति सर्वैरपि
श्रेयोर्थिभिर्गीताः शरणीकरणीया इति सोऽयमर्थो धृतराष्ट्रेणाविव-
क्षितोऽपि 'मा निषाद—' इतिवद्भगवत्या सत्यसरस्वत्या स्वय-
मुपनीयमानः पण्डितानां हृदयंगम इत्यास्तामतिविस्तरः ॥ १ ॥

इत्थं निजतनयविजयदुराशाविष्टेन धृतराष्ट्रेण मामकाः पाण्डवाश्च
किमकुर्वतेति पृष्टस्तद्दुराशानिरासाय प्रथमकौरववृत्तान्तं तावत्संजय
उवाच 'दृष्ट्वा' इत्यादिना 'ततः श्वेतैर्हयैः' इत्यतः प्राक्तनेन
ग्रन्थेन—

**संजय उवाच—**

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।**
**आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥**

व्यूढं व्यूहरचनया स्थितं पाण्डवसैन्यं दृष्ट्वा तदा दुर्योधनः सन्

राजा द्रोणाचार्यमुपेत्य वचनमब्रवीदित्यन्वयः । अत्र राजेत्यनेनैव कर्त्राकाङ्क्षाशान्तेर्दुर्योधनपदमधिकं सत् दुःखं योधनमस्येति व्युत्पत्त्या युद्धनिर्विण्णो जात इत्यमुमर्थं प्रतिपादयति । तत्र हेतुः— दृष्ट्वा तु । तु-शब्देन दर्शनपूर्वावस्थातो वैलक्षण्यं द्योत्यते । अनेन— त्वत्पुत्रस्याप्येवमेव बहुक्षौहिणीबलाढ्योऽहं ममैव विजय इति प्रथमं दुराशा स्थिता; सा तु पाण्डवबलदर्शनानन्तरं विगता; त्वमपि तथैव तद्बलं द्रक्ष्यसि चेन्निराशो भविष्यसि; न चान्धस्य तव तद्दर्शनं घटत इति ध्वन्यते । पाण्डवानीकमित्यनेन— प्रधानभूताः पाण्डवा न दृष्टाः, किं तु तदनीकमात्रम्; तदपि न युद्धायोत्थितम्, किं तु व्यूढं व्यूह्य स्वस्वस्थाने स्थितम्; यदैनां व्यूढसेनां दृष्ट्वैवायं निर्विण्णो जातस्तदा प्रधानभूतपाण्डवदर्शने शस्त्रसंपाते च सति कीदृशीमवस्थां गमिष्यतीत्युक्तं भवति । तदा दुर्योधन इति, दुर्योधननाम तदानीमन्वर्थं जातमित्यपहासोक्तिः । द्रोणमित्यनुक्त्वा आचार्यमिति वदता 'भीष्ममेवाभिरक्षन्तु' इत्यग्रे करिष्यमाणद्रोणातिरस्कारस्याचार्यविषयत्वेनानर्थत्वं दर्शितम् । भीष्मादीन्विहाय द्रोणं प्रत्युपगमनस्य 'व्यूढां द्रुपदपुत्रेण' इत्यग्रिमश्लोके हेतुं वक्ष्यति । उपसंगम्येति । उप समीपे सम्यगुपसत्तिविधिना गत्वा अब्रवीत् कर्णे रहस्यमुक्तवानित्यर्थः । अनेन महद्भयं जातमिति दर्शितम् । राजेत्यनेन राज्ञ एवेदृशी दशा चेत्किमुतान्येषामिति सूचितम् ॥ २ ॥

तदेव राजवचनमाह नवभिः—

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

**स्पष्टोऽन्वयः** । पाण्डुपुत्राणां महतीं चमूं पश्येत्यनेन स्वस्य भयकारणं तन्निमित्तमागमनं च दर्शितम् । ननु बह्वक्षौहिणीपतेस्तवैव महती सेना, न त्वियम्; तत्कुतो बिभेषि? तत्राह— एतामिति । न संख्याकृतमिह सेनामहत्त्वम्, 'शतमप्यन्धानां न पश्यति' इति न्यायात्; किं तु विशिष्टसेनान्यधिष्ठितत्वपरदलाभेद्यव्यूहविशेषतेजः-शौर्योत्साहादिसंपन्नत्वरूपम्; तच्चात्र प्रत्यक्षमेवेत्यङ्गुल्या निर्देशसूचकोऽयमेतच्छब्दः । द्रुपदपुत्रेण धृष्टद्युम्नेन व्यूढां व्यूहरचनयाधिष्ठितामित्यनेन त्वद्वधार्थं द्रुपदेनोत्पादितोऽयं धृष्टद्युम्नः पुरतः सेनामधिष्ठाय तिष्ठन्क्षणमपि त्वया नोपेक्षणीयः किं तु हन्तव्य एवेत्ययमर्थो दर्शितः । तव शिष्येणेति च तद्वधोपायोक्तिः । त्वया हि धनुर्विद्यामध्यापितोऽयं तव शिष्यः; तस्य च मर्म त्वमेव वेत्सि; तथा च यदस्त्रमनेन नासीच्छिक्षितं यस्य चोपरि नास्य प्रत्यस्त्रं विद्यते, तादृशं किंचिद्दिव्यं चार्य तेन हन्तव्य इति भावः । धीमतेत्यनेन एतादृशव्यूहरचनाकुशलेऽस्मिन्निहते नैवंविधः पाण्डवानामन्यः सेनापतिर्बुद्धिमान्भविष्यतीति सर्वमिदं बलं विफलमिति ज्ञापितम् ॥ ३ ॥

एवमुक्तवति स्वस्मिन्नप्रतिवचनमाचार्यमुपलभ्य किमयमसमानयुद्धप्रवर्तनबुद्ध्या मां न भाषत इति वितर्क्य समानजनयुद्धमेवेति दर्शयन्नाह 'अत्र शूराः' इति त्रिभिः—

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।**
**युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥**

**धृष्टकेतुश्चेकितानः काशीराजश्च वीर्यवान् ।**
**पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥**

**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥**

अत्र अस्यां धृष्टद्युम्नाधिष्ठितायां पाण्डवसेनायां महान्त इष्वासा धनूंषि येषां ते धनुर्विद्याप्रवीणाः शूराः, सन्तीति शेषः । ननु धनुर्विद्याचार्योऽहं महाञ्शूरः; मम तु पुरतस्तावेव भीमार्जुनौ गणय, किमेतैर्धानुष्कैरित्यत आह— भीमार्जुनसमा युधीति । तानेव शूरान्नामभिर्निर्दिशति— युयुधान इति । युयुधानादयो द्रौपदेयान्ताः सप्तदश राजानः । तेषामेव यथायोगं महारथो वीर्यवान्नरपुंगवो विक्रान्तो वीर्यवानिति पञ्च विशेषणानि । तत्र युयुधानः सात्यकिः । विराटादय उत्तमौजान्ता दश तत्तन्नामान एव । सौभद्रोऽभिमन्युः । द्रौपदेया द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यो जाताः प्रतिविन्ध्यादयः 'प्रथमः प्रतिविन्ध्यस्तु श्रुतसेनस्तथापरः । श्रुतकीर्तिः शतानीकः श्रुतकर्मा तु पञ्चमः' इति श्लोकोक्ताः । द्रौपदेयाश्चेति चकारस्य महारथा इत्यनेनान्वयः । तथा च युयुधानादयः सर्व एवैते महारथा अतिरथाश्च; न त्वेतेषां मध्ये

कश्चिदपि रथोऽर्धरथो वास्तीति नैतेऽवमन्तव्या इत्यर्थः । महारथादीनां लक्षणं तु— 'एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः । अमितान्योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः । रथस्त्वेकेन यो योद्धा तन्न्यूनोऽर्धरथो मतः' इति ॥ ४—६ ॥

एवमुक्तवत्यपि स्वस्मिन्नप्रत्युत्तरं द्रोणमुपलभ्य; नूनमयमादित आरभ्य पाण्डवपक्षपाती मन्मतप्रतिक्षेप्ता, अतो मन्निदेशमननुमन्यमानो मां न प्रतिभाषत इति निश्चित्य; किमित्येवंविधे शत्रुपक्षीयेऽस्मिन्निजभयमसूचयम्? अहो पुनरहमपहासपदमासम्, तथा राजा नाचार्येण प्रतिभाषित इति लोकमध्येऽवमानितोऽपि जातोऽस्मि इति विचार्य; दुर्योधनः पुनः स्वबलस्तुतिव्याजान्निजभयमाच्छादयन् गुरुमुखाच्च प्रियवचनमादातुं तमभिष्टुवन्नाह—

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥**

'अत्र शूराः' इति पूर्वश्लोकगतस्य अत्रेत्यस्य वा, 'मम सैन्यस्य' इत्युत्तरार्धगतसैन्यपदस्य वा विभक्तिविपरिणामेन, अनुषङ्गः । हे द्विजोत्तम, अस्माकं तु सैन्ये विशिष्टाः श्रेष्ठा ये मम सैन्यस्य नायका नेतारः, तान् ते तव संज्ञार्थं सम्यग्ज्ञानार्थं ब्रवीमि, तान्निबोध अवधारयेति योजना । अस्माकं सैन्य इत्यनेन यथा ममैतत्सेनास्वामित्वं तथा तवापीत्याचार्यबहुमानो दर्शितः । तु-शब्दः 'अत्र शूरा महेष्वासाः' इति पूर्वोक्तपाण्डवदलगतशूरवैलक्षण्यार्थः । तदेवाह—विशि-

ष्ठा इति । भीमार्जुनसमत्वेन पूर्वोक्तेभ्यो युयुधानादिभ्यः श्रेष्ठा इत्यर्थः । 'कथं भीष्ममहं संख्ये द्रोणं च' इति प्रस्तुत्य 'यद्वा जयेम यदि वा नो जयेयुः' इत्यर्जुनेन भीष्मद्रोणनिमित्तकनिजपराजयस्य शङ्कितत्वेन भगवतापि 'द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान् । मया हतांस्त्वं जहि मा व्यथिष्ठाः' इति भीष्मद्रोणादिनिमित्तकार्जुनीयभयस्यानूदितत्वेन भीष्मादयो भीमार्जुनातिशायिन इति सर्वसंप्रतिपन्ना इत्यभिमानः । मम सैन्यस्येत्युक्त्या—लोके सेनानीद्वारक एव राज्ञः सैन्यानुबन्धः; इह तु न तथा, किं तु मयैव पृथक्पृथग्दानमानादिसत्कृतं सैन्यं मय्येवानुरज्यत इति साक्षादेव स्वस्य सेनासंबन्ध इति दर्शितम् । संज्ञार्थं ब्रवीमि निबोधेत्यनेन मयैतान्सर्वानपि सेनापतीन्सम्यग्विज्ञाय त्वयैव यथार्हं विनियोज्यास्ते इति बहुमानोक्तिर्व्यज्यते । द्विजोत्तमेत्यनेन च— तिष्ठन्त्वन्ये भीष्मादयो विशिष्टाः क्षत्रियाः; 'धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्' इति निखिलक्षत्त्रबलातिशायि ब्रह्मतेजोबलजलनिधिस्त्वमेक एवालमस्माकमिति स्तुतिराचार्यस्याभिमुख्याय क्रियते । वस्तुतस्तु 'पश्यैतां पाण्डुपुत्राणाम्' इत्यादिना मया बहुधोच्यमानोऽपि तूष्णीमेव स्थितस्त्वं निःसंज्ञोऽसीति मत्वा तव संज्ञार्थं ब्रवीमीत्यन्तःपारुष्यगर्भोक्तिः । द्विजोत्तमेत्यपि क्षत्रियश्चेत्खलु परदलगतशूरवर्णनमाकर्ण्य तद्युयुत्सासमुत्साहमापत्स्यते; त्वं तु ब्राह्मणः; कुतस्तव क्षात्त्रम्? अतो मौनेनावस्थानमुचितमिति पारुष्यगर्भा । निबोधेति भौवादिकपरस्मैपदनिबोधे रूपम् । तान्निबोध तान्ब्रवीमि, इति वाक्यभेदात् न तच्छब्दद्वयस्य पुनरुक्तिः ॥ ७ ॥

विशिष्टानेवाह—

**भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥**

पूर्वोक्तब्राह्मणबलप्राधान्याभिप्रायेण स्तुत्यर्थतया वा भवानिति द्रोणस्य भीष्मादप्यादौ गणनम् । विकर्णो दुर्योधनानुजः । सौमदत्तिः सोमदत्तस्य पुत्रो भूरिश्रवाः । समितिंजय इति विशेषणम् । समितिं युद्धं जयतीति तथा ॥ ८ ॥

एवं द्रोणादीन्कतिचिन्निर्दिश्य पाण्डवबल इव नास्मद्बले परिमिताः सेनान्यः शूराः, किं त्वनन्ता इति न पृथक्ते निर्देष्टुं शक्यन्त इत्याह—

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

अन्ये च शल्यकृतवर्मादयः बहवोऽनन्ताः शूराः, तिष्ठन्तीति शेषः । ननु तिष्ठन्तु शूराः, तथापि स्वार्थ इव ते परार्थेऽपि किं तथा शौर्यं करिष्यन्ति? तत्राह—मदर्थ इति । मत्प्रयोजनार्थे जीवितं त्यक्तुमध्यवसिता इत्यर्थः । अनेनानुरागातिशयो दर्शितः । तथापि स्वस्वपरिचितशस्त्रमात्रयोधिन एते बहुशस्त्रयोधिभिः परकीयैरभिभूयेरन्नित्यत उक्तं नानाशस्त्रप्रहरणा इति । नानाविधानि शस्त्राणि प्रहरणानि युद्धसाधनानि येषां ते तथा । सर्वे इत्यनेन ए-

तेषां मध्ये न कश्चिदप्यनेवंविधोऽस्तीत्युक्तम् । युद्धविशारदा इत्यनेन च बहुयुद्धानि पूर्वं कृतवन्तो न त्विदंप्रथमतया युद्धे प्रवर्तिता इति शौर्यातिशयो दर्शितः ॥ ९ ॥

एवं शौर्येण संख्यया च स्वशूराणामाधिक्योक्त्या यत्पूर्वम् 'अत्र शूरा महेष्वासाः' इत्यादिना सूचितं परकीयशूरप्रयुक्तं निजभयम्, तदाच्छादितम् । इदानीम् 'पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्' इत्यादिनाविष्कृतं यत्परसैन्यप्रयुक्तं निजभयम्, तत्स्वसैन्याधिक्यवर्णनेनाच्छादयति—

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥**

तत्पूर्वोक्तविशिष्टबहुशूरपुरुषाधिष्ठितं भीष्मेण सेनापतिना अभितः सर्वतो रक्षितमक्षौहिणीसंख्यया चाधिकम् अस्माकं बलम् अपर्याप्तमपरिच्छिन्नम्, 'जगत्यपर्याप्तसहस्रभानुना' इत्यादिप्रयोगदर्शनात् । एतेषां पाण्डवानां तु इदम् अस्मदीयशूरापकृष्टयुयुधानादिपरिमितशूरोपेतं भीमाभिरक्षितमक्षौहिणीसंख्यया च न्यूनं बलम् उक्तविविधाधिक्यवैधुर्यात् पर्याप्तं परिमितम् । यद्यपि कुरुबले भीष्म इव पाण्डवबले धृष्टद्युम्नः सेनाधिपत्येऽभिषिक्त इति भीष्मप्रतिद्वन्द्वितया धृष्टद्युम्नाभिरक्षितमित्येव वक्तुमुचितं न तु भीमाभिरक्षितमिति; तथापि भीष्मस्य पुरतो धृष्टद्युम्नस्य का गणनेत्यभिप्रायेण तं विहाय युधिष्ठिरेण धृष्टद्युम्नाभिषेकात्पूर्वमुद्योगपर्वणि सेनापतित्वेन निश्चितं

विशिष्टानेवाह—

**भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥**

पूर्वोक्तब्राह्मणबलप्राधान्याभिप्रायेण स्तुत्यर्थतया वा भवानिति द्रोणस्य भीष्मादप्यादौ गणनम् । विकर्णो दुर्योधनानुजः । सौमदत्तिः सोमदत्तस्य पुत्रो भूरिश्रवाः । समितिंजय इति विशेषणम् । समितिं युद्धं जयतीति तथा ॥ ८ ॥

एवं द्रोणादीन्कतिचिन्निर्दिश्य पाण्डवबल इव नास्मद्बले परिमिताः सेनान्यः शूराः, किं त्वनन्ता इति न पृथक्ते निर्देष्टुं शक्यन्त इत्याह—

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

अन्ये च शल्यकृतवर्मादयः बहवोऽनन्ताः शूराः, तिष्ठन्तीति शेषः । ननु तिष्ठन्तु शूराः, तथापि स्वार्थ इव ते परार्थेऽपि किं तथा शौर्यं करिष्यन्ति? तत्राह—मदर्थ इति । मत्प्रयोजनार्थे जीवितं त्यक्तुमध्यवसिता इत्यर्थः । अनेनानुरागातिशयो दर्शितः । तथापि स्वस्वपरिचितशस्त्रमात्रयोधिन एते बहुशस्त्रयोधिभिः परकीयैरभिभूयेरन्नित्यत उक्तं नानाशस्त्रप्रहरणा इति । नानाविधानि शस्त्राणि प्रहरणानि युद्धसाधनानि येषां ते तथा । सर्वं इत्यनेन ए-

तेषां मध्ये न कश्चिदप्यनेवंविधोऽस्तीत्युक्तम् । युद्धविशारदा इत्यनेन च बहुयुद्धानि पूर्वं कृतवन्तो न त्विदंप्रथमतया युद्धे प्रवर्तिता इति शौर्यातिशयो दर्शितः ॥ ९ ॥

एवं शौर्येण संख्यया च स्वशूराणामाधिक्योक्त्या यत्पूर्वम् 'अत्र शूरा महेष्वासाः' इत्यादिना सूचितं परकीयशूरप्रयुक्तं निजभयम्, तदाच्छादितम् । इदानीम् 'पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्' इत्यादिनाविष्कृतं यत्परसैन्यप्रयुक्तं निजभयम्, तत्स्वसैन्याधिक्यवर्णनेनाच्छादयति—

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥**

तत्पूर्वोक्तविशिष्टबहुशूरपुरुषाधिष्ठितं भीष्मेण सेनापतिना अभितः सर्वतो रक्षितमक्षौहिणीसंख्यया चाधिकम् अस्माकं बलम् अपर्याप्तमपरिच्छिन्नम्, 'जगत्यपर्याप्तसहस्रभानुना' इत्यादिप्रयोगदर्शनात् । एतेषां पाण्डवानां तु इदम् अस्मदीयशूरापकृष्टयुयुधानादिपरिमितशूरोपेतं भीमाभिरक्षितमक्षौहिणीसंख्यया च न्यूनं बलम् उक्तविविधाधिक्यवैधुर्यात् पर्याप्तं परिमितम् । यद्यपि कुरुबले भीष्म इव पाण्डवबले धृष्टद्युम्नः सेनाधिपत्येऽभिषिक्त इति भीष्मप्रतिद्वन्द्वितया धृष्टद्युम्नाभिरक्षितमित्येव वक्तुमुचितं न तु भीमाभिरक्षितमिति; तथापि भीष्मस्य पुरतो धृष्टद्युम्नस्य का गणनेत्यभिप्रायेण तं विहाय युधिष्ठिरेण धृष्टद्युम्नाभिषेकात्पूर्वमुद्योगपर्वणि सेनापतित्वेन निश्चितं

महाबलं भीमं सेनापतित्वेन गृहीत्वा, सोऽपि स्वेच्छामरणधर्मतया जितकालस्य सकलक्षत्रियजिता जामदग्न्येनाप्यजितस्य महाबलपराक्रमनिधेर्भीष्मस्य न समान इत्यभिमानेन भीमाभिरक्षितं पर्याप्तमित्युक्तम्। एतेन च– धृष्टद्युम्नं घातयितुं यस्त्वां प्रति 'व्यूढां द्रुपदपुत्रेण' इत्याद्युक्तम्, तत्तु त्वद्वधार्थमुत्पादितस्त्वया नोपेक्षणीय इति त्वदर्थमेवोक्तं न तु मदर्थम्, मदीयसेनापतेरप्यग्रे गणनानर्हाद्धृष्टद्युम्नान्मम भीतेरप्रसक्तेः; तत्र च त्वमवज्ञया मौनी भवसि चेत्किं नश्छिन्नम्? इत्याचार्यं प्रति सोल्लुण्ठनं वाक्यमभिव्यज्यते। पितामहवृकोदरादिनामान्तरसत्त्वेऽपि 'भीष्माभिरक्षितम्' 'भीमाभिरक्षितम्' इति वदतायं चमत्कारो दर्शितः— भीष्मनामनि भीमनामान्तर्भवति; भीमनामनि तु न भीष्मनाम, मध्ये षकारस्याधिकत्वात्। तथा च भीष्मभीमयोर्लोके भयंकरत्वेनाविशेषेऽपि भीष्मस्तावन्नामतो भीमं निगिलति, भीमस्तु न तथेति तयोर्महत्त्वामहत्त्वे इति ॥ १० ॥

इत्थमाचार्यस्तुतिपूर्वकं निजबलप्रदर्शनेन स्वस्य परबलान्न किंचिद्भयमस्तीति न तदर्थमिहागमनम्, किं तु गुरुदर्शनार्थमेवेति तत्प्रतिवचनावसरो दर्शितः। तमेतमन्तःकापट्यगर्भमुक्तिसंदर्भमुपश्रुत्य सत्यमयमस्मिन्नपि समये निर्मर्यादं वक्ति वचनमिति विचार्याचार्येणाप्रतिभाषितोऽतिरोषितो भवन्ननार्यो दुर्योधनस्तं तिरस्कुर्वन्नाह—

**अयनेषु च सर्वेषु यथाभागमवस्थिताः।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥**

भागो नाम पूर्वादिक्रमेणास्यायमयमिति विभज्य नियमितो योधानामवस्थानार्थो देशः, तमनतिक्रम्य यथाभागम् अयनेषु व्यूहप्रवेशमार्गेषु अवस्थिताः विभक्तस्वस्वरणभूम्यपरित्यागेन सर्वतः समावृत्य सज्जीभूय स्थिताः सन्त इत्यर्थः । भवन्तः सर्वेऽपि भीष्ममेव अभितो रक्षन्तु । स एक एवास्माकं जीवातुरिति भावः । तत्र च भवन्तः सर्वे इति योधाभिमुख्यप्रदर्शनेनाचार्यः पृष्ठे कृत इति ज्ञापितम् । भीष्ममेवेत्येवकारेण द्रोणव्यवच्छेदः । तेन च हितमपि मदभिहितमविज्ञाय मामवज्ञातवतो द्रोणस्याग्रे भाविनि धृष्टद्युम्नसमरदौरवस्थ्ये भवद्भिरुदास्थेयमिति तत्प्रतीकारक्रौर्यमुद्गीर्यते ॥ ११ ॥

एवं द्रोणतिरस्कृतस्य स्वपुत्रस्य भीष्मतिरस्कारोऽप्यवश्यंभाव्येव, द्रोणभीष्मयोरेकविचारत्वात्; तथा च सत्यद्यैव नष्टं मत्कुलमिति व्याकुलं धृतराष्ट्रमालोक्याह संजयः—

**तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥**

कुरुषु वृद्धः श्रेष्ठः प्रतापवान्पितामहो भीष्मः तस्य द्रोणतिरस्कारदुःखितस्य दुर्योधनस्य हर्षं संजनयन् । हेतौ शतृप्रत्ययः । हर्षं जनयितुम् उच्चैः सिंहनादं विनद्य कृत्वा । सिंहनादमिति णमुलन्तत्वाद्धातोः पुनः प्रयोगः । शङ्खं दध्मौ वादितवान् । अत्र कुरुवृद्ध इत्यनेन— यद्यपि द्रोण इव भीष्मेऽप्यादित आरभ्य दुर्वि-

नीत एव तव पुत्र इति भीष्मेणाप्युपेक्षणीय एव, तथापि कुरु-श्रेष्ठतया स्वमहत्त्वमालोच्यैव तेन नोपेक्षित इति सूचितम्। प्रता-पवानित्यनेन परबलभयादिते राज्युपेक्षिते पराभिभवनतेजोरूपप्र-तापहानिर्भवतीति दर्शितम्। वृद्धः पितामहस्तस्य हर्षं जनयन्नित्य-नेन– परबलभयेनाचार्यतिरस्कारेण च गतप्राणस्य दुर्योधनस्य तात्कालिकप्राणप्रतिष्ठापनार्थ एवायं सिंहनादो न तु वस्तुतः परब-लनिरासपर्यन्तः, वृद्धपितामहस्य तदशक्तेरिति ध्वनितम् ॥ १२ ॥

एवं भीष्मः स्वयं सिंहनादपूर्वकं शङ्खमाध्माय स्वसैन्येऽपि सर्वत्र शङ्खभेर्यादिनादमकारयदित्याह—

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥**

पणवा आनका गोमुखाश्च वाद्यविशेषाः। सहसा तत्क्षणमेव अभ्यहन्यन्त वादिताः। कर्मकर्तरि लकारः। स च शङ्खादिशब्दः तुमुलो महानभवत् ॥ १३ ॥

एवम् 'मामकाः पाण्डवाश्च किमकुर्वत' इति प्रश्ने कौरववृत्ता-न्तमुक्त्वा पाण्डववृत्तान्तमाह तत इत्यादिभिः षड्भिः—

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥**

ततो माधवः पाण्डवश्च शङ्खौ प्रदध्मतुरित्यन्वयः। कौरवेषु दुर्यो-

धनस्येव पाण्डवेष्वपि प्रधानभूतस्य राज्ञो वृत्तान्ते कथनीये, माधवः पाण्डव इति प्रधानतो भगवद्वृत्तान्तं वदता– भगवानेव पाण्डवबले प्रधानभूतो राजा, धर्मार्जुनादयस्तु निमित्तमात्रमिति ज्ञाप्यते । तत्र च कथं पाण्डवसारथेर्भग[वत]स्तद्राजत्वमिति शङ्कानिरासाय माधवः पाण्डव इति पूर्वपश्चाद्भावेन निर्दिष्टम् । पाण्डवरक्षणार्थमवतीर्णेन भगवता स्वरक्षणीयस्य परैरुपघाते प्राप्ते तं पृष्ठतो विधाय स्वयमग्रेऽवस्थितमित्येतदेव भगवतः पाण्डवसारथ्यं नाम । तच्च न तत्स्वामित्वविरोधीति भावः । माधवपदेन– लक्ष्मीपतिर्यत्र तत्रैव जयशौर्यादिसर्वविधलक्ष्मीनिवास इति पाण्डवानामेव जयो न त्वलक्ष्मीकस्य दुर्योधनस्येति सूचितम् । स्यन्दने स्थिताविति रथस्थत्ववर्णनेन परबलं दृष्ट्वा भयेनाचार्यमुपसंगम्य ततो योधान्भीष्मं चोपधाव्य तत इतो विलुठतो दुर्योधनाद्वैलक्षण्यमुक्तम् । प्रथमतो यं यथा रथमारूढौ, तत्रैव तथैव स्थितौ, न तु कुतश्चित्क्वापि प्रचलिताविर्त्यर्थः । स्थिताविति तुल्यवदवस्थानोक्त्या– रथचालनकाल एव भगवतः सारथ्युपवेशस्थानेऽवस्थानम्, अर्जुनस्य रथमध्येऽवस्थानम्, समयान्तरे तु सर्वदा द्वयोरेकस्मिन्नेवासनेऽवस्थितिरिति तयोरखण्डसख्यातिशयो दर्शितः । श्वेताश्वरथानामन्येषामपि बहुशः सत्त्वेऽपि खाण्डवदहनसमयेऽग्निना यः श्वेताश्वरथोऽर्जुनाय दत्तः, येन च श्वेतवाहन इत्यर्जुनस्यासाधारणं नाम, सोऽयं दिव्यो रथ इति दर्शयितुं श्वेतैर्हयैर्युक्त इत्युक्तम् । महतीत्यनेन 'उपेतं राजतैरश्वैर्गन्धर्वैर्हेममालिभिः । पाण्डुराभ्रप्रतीकाशैर्मनोवायुसमैर्जवे ॥ सर्वोपकरणैर्युक्तमजेयं देवदानवैः । ससर्ज यं स्वतपसा भुवने

भुवनप्रभुः ॥ प्रजापतिरनिर्देश्यं यस्य रूपं रवेरिव । आश्रिता यं रथश्रेष्ठं शक्रध्वजसमा बभौ ॥ तापनीया सुरुचिरा ध्वजयष्टिरनुत्तमा । यस्यां तु वानरो दिव्यः सिंहलाङ्गूललक्षणः ॥ भीमो ननर्द तत्रास्य संश्रितो मूर्ध्न्यशोभत । ध्वजे भूतानि चात्रासन्विविधानि महान्ति च ॥ नादेन रिपुसैन्यानां येषां संज्ञा प्रणश्यति ' इत्यादिपर्वोक्तं रथमाहात्म्यं स्मारितम् । तेन च— तादृशो रथ एक एवालम्; तदुपरि माधवः पाण्डवश्च किल ? किमु वक्तव्यं जयविषय इति सूचितम् । दिव्यौ शङ्खावित्यनेन 'ततः शङ्खाश्च—' इति पूर्वोक्तपरबलशङ्खानां प्राकृतत्वेनाकिंचित्करत्वमुक्तम् । माधवः पाण्डवश्चैवेत्येवकारस्य त्वयमर्थः—कुरुसेनापतिना भीष्मेण स्वयं शङ्खं ध्मात्वा सर्वतः सैन्ये शङ्खनादे प्रवर्तिते सति, तदनुरूपतया पाण्डवसेनापतिना धृष्टद्युम्नेन स्वयं तथा विधातुमुचितम्; न तु तथा कृतम्; कृष्णार्जुनावेव शङ्खौ वादितवन्ताविति । अत्र हेतुः प्रदध्मतुरित्यत्र प्रकर्षार्थवाचिना प्रेत्युपसर्गेणोक्तः । प्रकर्षोऽप्यत्र सकलधार्तराष्ट्रगर्भनिर्भेदपर्यन्ततारूपः, 'स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्' इत्यादि वक्ष्यमाणत्वात् । ततश्चायं भावः— यदि हि धृष्टद्युम्नादय एव शङ्खान्वादयेयुः, तदा भीष्मादिवादनस्यात्रापि प्रतिशङ्खवादनं जातमित्येव स्यात् । परहृदयविदारणपर्यन्तं शङ्खध्वनिर्विधेय इति हि भगवतोऽभिमतम् । अतस्तदर्थं कृष्णार्जुनावेव प्रदध्मतुरिति ॥ १४ ॥

'दिव्यौ शङ्खौ' इत्युक्तं दिव्यत्वं दर्शयन्नेव भगवच्छङ्खवादनानुप्रवृत्तं पाण्डवबलशङ्खवादनं प्रपञ्चयति पाञ्चजन्यमित्यादिभिः

पञ्चभिः—

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥**

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**
**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥**

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥**

**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।**
**सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥**

सर्वेन्द्रियाधिष्ठातृत्ववाचिना हृषीकेशपदेन भगवतः परहृदयविदारणं न दुष्करम्, नियम्यभङ्गे नियन्तुर्भाराभावादिति सूचितम् । पाञ्चजन्यं देवदत्तमिति च नामग्रहणेन कृष्णार्जुनशङ्खयोर्दिव्यत्वं दर्शितम् । पौण्ड्रः अनन्तविजयः सुघोषः मणिपुष्पकः इति भीमयुधिष्ठिरनकुलसहदेवशङ्खानां नामानि । अनेन च पाण्डवसेनायामेतावन्तः स्वनामभिः प्रसिद्धाः शङ्खाः, परसैन्ये तु नैकोऽपि तादृशोऽस्तीत्याशयो व्यज्यते । परमेष्वासो महाधनुर्धरः काश्यः काशीराजः । स्पष्टमन्यत् ॥ १५—१८ ॥

प्रदध्मतुरित्युक्तं प्रकर्षमेव स्फुटीकरोति—

**स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।**
**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥**

स घोष इति । भगवत्पाञ्चजन्यघोषस्तदनुप्राणितोऽर्जुनादिशङ्खघोषश्चेत्यर्थः । धार्तराष्ट्राणामिति । धृतराष्ट्रसंबन्धिनां दुर्योधनभीष्मद्रोणादीनां सर्वेषामपीत्यर्थः । 'तस्येदम्' इति संबन्धसामान्येऽण्प्रत्ययः । हृदयानि मनांसि वक्षांसि च । 'हृदयं चित्तवक्षसोः' इति निघण्टुः । व्यदारयत् बिभेद । तत्र मनोविदारणं नाम ज्ञानेच्छाकृतिधैर्योत्साहादिमनोधर्मनाशनम् । वक्षोविदारणं तु भयप्रयुक्तो महाविपत्तिष्वनुभूयमानो गर्भनिर्भेदः । एवमुभयविधहृदयविदारणोक्त्या धार्तराष्ट्रा निहता एव जाता इत्युक्तं भवति । तदेतद्भगवानेव वक्ष्यति—'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्' इति । पूर्वमेव शङ्खवादनकाल एवेत्यर्थः । अत्र घोषो हृदयानि व्यदारयदित्यनेन भगवतः सत्यप्रतिज्ञत्वं सूचितम् । स्वयमयोद्धैव पाण्डवयुद्धं निर्वर्तयिष्यामीति हि भगवता प्रतिज्ञातम्; तथैव च कृतम् । पाञ्चजन्यघोष एव धार्तराष्ट्राञ्जघान, न तु भगवानिति । 'ततः शङ्खाश्च भेर्यश्च' इति श्लोके धार्तराष्ट्रशङ्खनादोऽपि तुमुलत्वेनोक्तः, तथैवायमपि तुमुल इति भ्रमं निराकरोति—नभश्च पृथिवीं चैव व्यनुनादयन्निति । वीत्युपसर्गः पृथक्करणवाची । भूमिमाकाशं च विभिद्यानुनादं कुर्वन्नित्यर्थः । पृथिवीं चैवेत्येवकारेण पृथिव्याकाशौ विदारयतो धार्तराष्ट्रविदारणे को वा भार इति दर्शितम् ॥ १९ ॥

यद्येवं शङ्खनादेनैव धार्तराष्ट्रा निर्भिन्नाः तर्ह्यद्यैव नष्टं मत्कुलम्,

अहो कष्टम्, इति व्याकुलं धृतराष्ट्रं दृष्ट्वाह संजयः अथेत्यादिसार्धेन—

**अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।**
**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥**
**हृषीकेशं तदा वाक्यमिदमाह महीपते ॥ २० ॥**

अथ भगवच्छङ्खवादनानन्तरं तद्विदीर्णहृदयतया तदैव मरणे समुपस्थितेऽपि व्यवस्थितान् 'मया हतांस्त्वं जहि' इति भगवत्संकल्पितार्जुनजयख्यातिकारकत्वेन सप्राणीभूय युद्धोद्योगेनावस्थितान् धार्तराष्ट्रान्दृष्ट्वा, कपिध्वजः कपिना रामायणमणिहारमहानायकरत्नेन भगवतः शंकरस्यावतारेणाञ्जनेयेन ध्वजरूपतयानुगृहीतः। अनेन भगवच्छङ्खनादनिहतावशिष्टस्यापि धार्तराष्ट्रस्वरूपस्य नात्मलाभः संभावितः, केतनहनुमद्गर्जनाशनेरवर्जनीयत्वात् इति दर्शितम् । पाण्डवः तदा शस्त्रसंपाते शस्त्रपातने प्रवृत्ते कर्तव्यतया प्राप्ते सत्यपि धनुः गाण्डीवम् उद्यम्य सज्यं कृत्वा हृषीकेशमिदं वाक्यमाह, न तु सहसा शस्त्रसंपातं कृतवानित्यर्थः । एवं च— त्वदीयानामीदृश्यवस्था ; अर्जुनेन च नाद्यापि योद्धुमुपक्रान्तम् ; अतः स्वपुत्रदुराशां त्यक्त्वा इदानीमपि पाण्डवैः सह समाधाय स्वपुत्रान्परावर्तयसि चेत्त्वत्कुलं स्थास्यति, नो चेद्विनङ्क्ष्यतीति भावः । महीपत इत्यनेन राज्ञा सता त्वया स्वपुत्रान्निगृह्यापि समाधातुं शक्यमिति दर्शितम् ॥ २० ॥

तदेवार्जुनवाक्यमवतारयति—

**अर्जुन उवाच—**

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥**

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।**
**कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥**

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥**

पाण्डव आहेत्युक्त्वा अर्जुन उवाचेति पुनर्वचनमादरार्थम्— अहो भाग्यमर्जुनस्य, येन सर्वजगन्नियोजकः परमेश्वरोऽपि नियुज्यते रथं स्थापयेति; किमिव हि भगवद्भक्तस्य दुर्लभमिति । ननु सेनाद्वयमध्ये रथस्थापने सति मुखे पतितान्बन्धूनुपलभ्य स्वजनवधव्यामोहेन युद्धविमुखो भविष्यसि; तथा सति प्रच्यावितमेव सर्वमपि कार्यमित्यतः संबोधयति— अच्युतेति । समरसमारम्भतः प्रच्युतेऽपि मयि, भक्तरक्षणव्रतादच्युतस्त्वं मां न च्यावयिष्यसीति तादृशे त्वयि मम नियन्तरि यन्तरि च अवस्थिते सति का मम कार्यच्युतिशङ्केति भावः । यावन्निरीक्षे, निरीक्षिष्य इत्यर्थः । 'यावत्पुरानिपातयोर्लट्' । ननु युयुत्सुनिरीक्षणेन तव किं फलम्? तत्राह—कैर्मयेति । अयमयमत्र योद्धेति युद्धप्रतियोगिनिर्धारणमेव निरीक्षणफलमित्यर्थः । नन्वेवं भीष्मद्रोणादीन्योद्धॄनुपलभ्याचार्यबुद्ध्या युद्धं त्यक्ष्यस्येवेत्यत

आह— योत्स्यमानानिति । दुर्बुद्धेर्धार्तराष्ट्रस्य युद्धे प्रियचिकीर्षवः सन्तः य एते भीष्मद्रोणादयः अत्र समागताः, तान्योत्स्यमानान्युद्धं करिष्यतोऽहमवेक्ष इत्यन्वयः । माध्यस्थ्यमर्यादां विहाय शत्रुषु मिलित्वास्माभिः सह योत्स्यमानेषु भीष्मद्रोणादिषु न मे वैमुख्यं भविष्यतीत्यर्थः ॥ २१—२३ ॥

ततः किं वृत्तमित्याकाङ्क्षायां

**संजय उवाच—**

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥**

**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।**
**उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥**

संजयधृतराष्ट्रसंवादरूपेऽस्मिञ्शास्त्रे सर्वस्यापि संजयवाक्यत्वे सत्यपि विशिष्यात्र संजय उवाचेत्यस्यायं भावः— सेनाद्वयमध्ये रथे स्थापिते, तत्रार्जुनस्य स्वजनोपलम्भेन शोकमोहाववश्यंभाविनाविति विज्ञायापि सर्वज्ञेन भगवता तन्निषेधमकृत्वा परसेनामुखे रथं स्थापयित्वा अस्मिन्नेव प्रसङ्गे निखिलशोकमोहनिबर्हणब्रह्मात्मतत्त्वज्ञानोपदेशेनार्जुनोऽनुग्राह्य इत्येतावत्पर्यन्तं निर्धारितमासीदित्यहो भगवतो भक्तवात्सल्यमर्जुनस्य च धन्यधन्यत्वमित्यमुं विशेषमिह व्यञ्जयितुं संजय उवाचेत्युक्तिरिति । एवमुक्त इति । हे भारत धृतराष्ट्र, एवं गुडाकेशेन अर्जुनेनोक्तो हृषीकेशः उभयोः सेनयो-

मध्ये भीष्मद्रोणयोः प्रमुखतः संमुखे, सर्वेषां महीक्षितां राज्ञां च प्रमुखत इति पूर्ववाक्यगतस्य समस्तस्यापि प्रमुखशब्दस्याकर्षणार्थश्चकारः। तत्र रथोत्तमं स्थापयित्वा हे पार्थ समवेतानेतान्कुरून्पश्येत्युवाच। अत्र रथं स्थापयामासेत्येतावतैव निर्वाहे समवेतान्कुरून्पश्येत्युक्त्या स्वसेनातो निर्गत्यैकाकितया परसेनामुखे स्थित्वा युयुत्सून्निरीक्षमाणं मां कुरवः सबलाः परिवार्य निगृह्णीयुरिति मा शङ्किष्ठाः; तदाहं रक्षकोऽस्मि; त्वं निःशङ्कीभूय यं यं द्रष्टुमिच्छसि तं पश्य इत्ययमर्थो दर्शितः। हृषीकेश इत्यनेन— सर्वेन्द्रियनियामकेन भगवता परित्रातमर्जुनं प्रति कथमयमेकाक्यस्मानविगणय्य संमुखे तिष्ठतीति केनचिद्घ्राणं मोक्तुं चक्षुषा वा द्रष्टुं मनसा वा स्मर्तुमशक्यम्, पाण्यादिव्यापाराणां भगवदधीनत्वात्; यः पुनः स्वजनवधव्यामोहलक्षणः शत्रुरर्जुनं ग्रहीष्यति, सोऽपि हृषीकेशपदवाच्यसर्वधीवृत्तिप्रेरकभगवत्प्रतिपादितदिव्यज्ञानेन निरसिष्यत इति सूचितम्। गुडाकेशेनेत्यनेन च गुडाकाया निद्राया ईशेन सर्वत्र जागरूकेणेत्यर्थकेन एकाकितया परबलं प्रविश्य तद्दिदृक्षुरप्यर्जुनो भगवदवलम्बेन प्रवृत्तत्वादप्रमत्त एवेति ज्ञापितम्। भारतेत्यनेन च अद्यापि द्रोहबुद्धिं त्यक्त्वा पाण्डवैः संधिं न मन्यस इति महति भरतवंशेऽस्मिञ्जनितुमनर्ह एव तत्र जातोऽसीति सोल्लुण्ठनं संबोध्यते ॥ २४—२५ ॥

अथार्जुनस्य स्वजनदर्शनेन मोहः शोकश्चासीदित्याह तत्रेति सार्धद्वयेन—

**तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।**
**आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥**
**श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥**

**तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ।**
**कृपया परयाविष्टो विषीदन्निदमब्रवीत् ॥ २७ ॥**

अथ रथस्थापनानन्तरं पार्थः तत्र रथस्थापनप्रदेशे स्थितान्पित्रादीनपश्यदित्यन्वयः । पितॄन् पितृव्यान्भूरिश्रवःप्रभृतीन्, पितामहान्भीष्मसोमदत्तप्रभृतीन्, आचार्यान्द्रोणकृपप्रभृतीन्, मातुलाञ्शकुनिप्रभृतीन्, भ्रातॄन्दुर्योधनादीन्, पुत्रान् दुर्योधनादीनां ये पुत्रा लक्ष्मणाद्यास्तान्, पौत्रान् लक्ष्मणादीनां पुत्रान्, सखीन् पूर्वस्निग्धानश्वत्थामादीन्, श्वशुरान् दुर्योधनादीनां ये श्वशुरास्तान्, सुहृदः शत्रुदले स्थित्वापि स्वपक्षपातिनः शल्यादीन् । तथा सेनयोरुभयोरपि, सुहृद इत्यनुषङ्गः; पक्षद्वयेऽपि तुल्यसौहृदाः केचिद्राजानः, तांश्चापश्यत् । ततः किं कृतवानित्यत आह— तानिति । ननु कृपयाविष्ट इत्ययुक्तम्, शत्रुवधे प्रवृत्तस्य हन्तव्येषु तेषु कृपायोगात्, अत आह— परयेति । विलक्षणयेत्यर्थः । वैलक्षण्यमेवोपपादयति— तान्बन्धून्समीक्ष्येति । सम्यक्पितृत्वाचार्यत्वादिप्रकारेणेक्षित्वेत्यर्थः । हन्तव्यत्वबुद्ध्या प्रवृत्तस्यैव पितृत्वादिप्रकारकतत्साक्षात्कारानन्तरमेते न हन्तव्या इति विपरीत

बुद्ध्युदये सति, ततो मन्निमित्तकमेतेषां मरणदुःखं मा भूदित्येवमाकारकमनोवृत्तिरूपा काचित्कृपा जाता। सा च आततायिषु वस्तुतो हन्तव्येषु दुर्योधनादिष्वस्थानेपातिनीति लोकप्रसिद्धकृपाविलक्षणैवेत्यतो मोहविकाररूपेयं कृपेत्यर्थः। आविष्ट इत्यनेन च अकस्मात्पिशाचावेशवत्कृपाख्यमोहावेशो जात इत्युक्तम्। विषीदन्नब्रवीदिति विषादवचनयोः समकालीनत्वोक्त्या अश्रुपातगद्गदकण्ठतादि विषादकार्यं वचनकाले दर्शितम्। यत्त्वत्र मधुसूदनसरस्वतीव्याख्यानम् —'कृपयाविष्ट इति, कृपया कर्त्र्या स्वव्यापारेणैवाविष्टः न तु कृपां केनचिद्व्यापारेणाविष्ट इति स्वतःसिद्धैवास्य कृपेति सूच्यते' इति, तच्चिन्त्यम्। अत्र हि कृपाशब्देन युयुत्सुविषयैव खलु कृपोच्यते। न तु दीनानाथशरणागतादिविषयार्जुनस्य नैसर्गिकी कृपा। युयुत्सुविषया च कृपा न तस्य स्वतःसिद्धा; तथा सति तस्य युद्धप्रवृत्तेरेवासिद्धिप्रसङ्गात्। प्रवृत्तस्य खल्वर्जुनस्यायं वृत्तान्तः। न च युयुत्सुविषया कृपा स्वव्यापारेणैवाविष्टा, स्वजनदर्शनव्यापारभूतेन मया ते न हन्तव्या इति मोहेनावेशितत्वात्। न च कृपयाविष्ट इति कर्तृत्वनिर्देशात्तस्याः स्वाभाविकत्वम्, 'पिशाचेनाविष्टः' इत्यादिव्यवहारसत्त्वात्। अतः अत्रागन्तुको मोहविकार एव कृपेति यथोक्तमेव युक्तमुत्पश्यामः॥ २६—२७॥

तदेवार्जुनवाक्यमवतारयति अर्जुन उवाचेत्यादिना यावदध्यायसमाप्ति—

**अर्जुन उवाच**—

अत्र कौन्तेयोऽब्रवीदित्युक्त्वापि पुनः अर्जुन उवाचेति वदता

संजयेन धृतराष्ट्रदुराशा निरस्ता । मोहाक्रान्तः कौन्तेय इति न स्वपुत्रदुराशा कार्या, सर्वमोहापनोदकभगवदनुगृहीतस्य तस्यार्जुनशब्दवाच्यपरिशुद्धस्वभावतानपायेन कदाचिद्वैचित्त्यस्याकिंचित्करत्वादिति ॥

'कृपया परयाविष्टो विषीदन्' इति पूर्वश्लोके 'कृपया परयाविष्टः' इत्यनेन मोहः 'विषीदन्' इत्यनेन शोकश्चोक्तः। तत्र प्रथमं शोकं तल्लिङ्गकथनेन दर्शयति त्रिभिः—

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ।**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥**

हे कृष्ण भक्तशोककर्षिन्निति प्रकृतोपयुक्तं संबोध्यते । युयुत्सुं सन्तं पुरतः स्थितं स्वजनं दृष्ट्वा स्थितस्य मम गात्राणि करचरणादीनि सीदन्ति शिथिलायन्ते निःसत्त्वानि भवन्ति, ततो न योद्धुं शक्नोमीत्यर्थः । सन्नगात्रतया कायिकं कर्म कर्तुमशक्ता अपि लोके वाचिकं किंचित्कुर्वन्ति ; तदप्यशक्यम्, शुष्यन्मुखतया वाग्व्यापारस्यैवानवकाशादित्याह— मुखं च परिशुष्यतीति ॥ २८ ॥

नन्वस्मिन्समये नैवं वक्तुमुचितम् ; विद्यमानमपि शोकविकारमाच्छाद्य धीरतयैव स्थेयमित्यत आह—

**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।**
**गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ॥ २९ ॥**

शरीरे वेपथुः कम्पो जायते। अनेन शोकविकारस्याच्छादयितुमशक्यत्वमुक्तम्। गाण्डीवं स्रंसत इत्यनेन अन्तर्बलरूपधैर्यराहित्यमुक्तम्। एतदेवाधैर्यं रोमाञ्चत्वक्परिदाहरूपाभ्यामन्तर्विकारान्तस्तापलिङ्गाभ्यां निदर्शितम्॥ २९॥

यद्येवं गाण्डीवं विसृज्य तूष्णीं तिष्ठ; तत्राह—

**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।**
**निमित्तानि च पश्यामि विपरीतानि केशव॥ ३०॥**

चो हेतौ। यस्मान्मे मनः चक्रमिव भ्रमति। मूर्च्छायाः पूर्वावस्थारूपविकारविशेषोऽत्र भ्रमणम्। तस्मात्स्थातुमपि न शक्नोमीत्यर्थः। ननु शात्रवाञ्जित्वा साम्राज्यमवाप्स्यसि; कुतः शोचसि? तत्राह—निमित्तानि चेति। शकुनान्यपि दिव्यान्तरिक्षभौमरूपाण्यशुभसूचकान्येव पश्यामि; अतो न जयाशावकाश इत्यर्थः। रामरावणयुद्धे राक्षसारिष्टसूचकानि निमित्तानि रघुनाथेनेव वस्तुतः कौरवारिष्टसूचकान्येव निमित्तान्यर्जुनेनोपलब्धानि; परं त्वत्र शोकव्याकुलत्वादर्जुनेन तेषु स्वारिष्टसूचकत्वमारोप्यैवमुक्तमिति ध्येयम्। 'केशवः क्लेशनाशाय' इति क्लेशनाशार्थमनुसंधेयतया पुराणप्रसिद्धेन केशवपदेन संबोधयन् दुःशकुनक्लेशनाशनमाशास्ते॥ ३०॥

इत्थम् 'कृपया परयाविष्टो विषीदन्' इति श्लोके विषादशब्दोक्तं शोकं प्रदर्श्य, इदानीम् 'कृपया परया' इत्यनेनोक्तं मोहं

दर्शयति 'न च' इत्यादिना 'एवमुक्त्वार्जुनः संख्ये' इत्यतः प्राक्तनेन—

**न च श्रेयो नु पश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥**

किं च, युद्धे स्वजनं हत्वा श्रेयः फलं दृष्टमदृष्टं वा किमपि न पश्यामि ॥ ३१ ॥

तत्र दृष्टफलाभावमुपपादयति द्वाभ्याम्—

**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।**
**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥**
**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥**

युद्धाद्विजयः, ततो राज्यम्, ततः सुखानि, इत्येतानि खलु दृष्टफलानि; तानि च अनाकाङ्क्षितत्वान्न मे फलानीत्यर्थः । कुतोऽनाकाङ्क्षितत्वमिति चेत्, तत्र वक्तव्यम्—राज्यसुखादीनां किमत्र स्वार्थमाकाङ्क्षा, किं वा स्वजनार्थम्? नाद्य इत्याह— किं न इति । 'हत्वा स्वजनम्' इति पूर्वश्लोकादनुषङ्गः । हे गोविन्द, स्वजनं हत्वा नः अस्माकं जीवितेन किम्, ततो राज्येन भोगैर्वा किमिति योजना । जीवतः खलु राज्यसुखकाङ्क्षा । वयं च स्वजनं हत्वा न जिजीविषामः । तथा च वक्ष्यति 'यानेव हत्वा न जिजीविषामः' इति । अतो न स्वार्थं तदाकाङ्क्षेत्यर्थः । नापि स्वजनार्थं तदाकाङ्क्षेत्याह— येषामिति । स्वजनानामित्यर्थः । यद-

र्थमस्माकं राज्याद्यपेक्षा, त एते स्वजनाः प्राणधनत्यागमङ्गीकृत्य युद्धार्थमवस्थिताः । तथा च स्वजनवधनिष्पाद्यानि राज्यानि न स्वजनार्थं भविष्यन्तीत्यर्थः । अत्र कृष्णेति निरतिशयानन्दब्रह्मवाचिना पदेन संबोधयन् भगवन्निष्ठानां राज्यसुखादीनि न प्रलोभकानीति वस्तुगतिं सूचयति । गोविन्देति च गां देववाणीं विन्दति प्राप्नोतीत्यर्थकेन धर्ममार्गप्रवर्तकस्त्वं बन्धुजनघातिनां जीवनाद्याकाङ्क्षित्वं न धर्म इति जानास्येवेत्युक्तम् ॥ ३२—३३ ॥

एवं दृष्टफलाभाव उक्तः; इदानीमदृष्टफलाभावमाह द्वाभ्याम्—

**आचर्याः पितरः पुत्रास्तथैव च पितामहाः ।**
**मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥**

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।**
**अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥**

न हन्तुमिच्छामीति । घ्नतोऽपि इत्यस्मादपिशब्दस्यानुषङ्गः । हन्तुमिच्छामपि न करोमि, आचार्यादिवधविषयेच्छामात्रस्यापि महानर्थकरत्वेन श्रवणात्; किमुत तद्वधस्येत्यर्थः । तथा च स्मरणमात्रेणापि महानर्थकरस्याचार्यादिस्वजनवधस्यादृष्टफलकत्वमत्यन्तायुक्तमिति भावः । ननु 'जिघांसन्तं जिघांसीयात्' इति वचनादाचार्यादयोऽपि जिघांसन्तो हन्तव्या इत्यत आह—घ्नतोऽपीति । 'गुरुं त्वंकृत्य हुंकृत्य' इत्यादिना शब्दमात्रेणापि गुरुद्रोहस्यानिष्टफलकत्वश्रव-

णात् 'जिघांसन्तम्—' इति वचनमाचार्याद्यतिरिक्तविषयकमिति भावः। मधुसूदनेत्यनेन मधुनामकासुरनाशिना त्वया तादृशदुष्टजनवध एवानुमन्तव्यो न त्वाचार्यादिवध इति दर्शितम् ॥ ३४—३५ ॥

एवं च न केवलं स्वजनवधे फलाभावमात्रम्, किं तु विपरीतफलमपीत्याह —

**निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।**
**पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६ ॥**

अत्र पूर्वार्धेन पूर्वोक्तफलाभावानुवादः। उत्तरार्धेन तु विपरीतफलमुच्यते। धार्तराष्ट्रान् धृतराष्ट्रसंबन्धिनः स्वजनानित्यर्थः। पापमेवेति। एतान्हत्वा स्थितानस्मान्पापमेवाश्रयेदित्यन्वयः। ननु 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहर्ता च षडेते ह्याततायिनः' इति संपूर्णाततायिलक्षणलक्षितत्वादेतेषां वधे कथं पापं स्यात्, 'नाततायिवधे दोषो हन्तुर्भवति कश्चन' इति स्मृतेः? तत्राह— आततायिन इति। आततायिनोऽपीत्यर्थः। आततायित्वेऽपि स्वजनत्वादेते न हन्तव्या इत्यभिमानः। जनार्दनेत्यनेन जनार्दनः सन्नपि 'छिन्द्यां स्वबाहुमपि यः प्रतिकूलवृत्तिः' इति स्वजनानभिमन्यमानस्त्वमेवात्र प्रमाणमिति द्योतितम् ॥ ३६ ॥

**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।**
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥३७॥**

तस्मादिति । यस्मात्पापमेवाश्रयेत्तस्मादित्यर्थः । किं च नैताव- दिह वक्तव्यं स्वजनघातिनः सुखं नास्तीति, किं तु लोकप्रसिद्धमे- वेदमित्याह— स्वजनं हीति । हिः प्रसिद्धौ । नन्वेवं युद्धविमुखस्य तव कथं देहयात्रेत्यत आह— माधवेति । श्रियः पतिं त्वामाश्रित- वतो मम न तच्छङ्केति भावः ॥ ३७ ॥

ननु स्वजनवधदोषे तुल्येऽपि तमविगणय्य यथैते युद्धे प्रवृत्ता- स्तथा त्वमपि प्रवर्तस्वेत्याशङ्क्य निराकरोति द्वाभ्याम्—

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥**
**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥**

यद्यप्येते दुर्योधनादयः राज्यलोभेन भ्रष्टविवेकाः कुलक्षयकृतं वर्णसांकर्यरूपं दोषं स्वजनवधप्रयुक्तं पापं च न पश्यन्ति, तथापि दोषं प्रपश्यद्भिरस्माभिः अस्मात्पापात्स्वजनवधयुक्तयुद्धरूपात् निव- र्तितुं कथं न ज्ञेयम्? न हि भ्रान्तवदभ्रान्तोऽपि प्रवर्तत इत्यर्थः । जनार्दनपदं पूर्ववद्व्याख्येयम् ॥ ३८—३९ ॥

कुलक्षयकृतमेव दोषं दर्शयति त्रिभिः—

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥**

सनातनाः परम्पराप्राप्ताः कुलधर्माः कुलक्षये सति कर्त्रभावात्प्रणश्यन्ति । ततः धर्मे नष्टे । जातावेकवचनम् । अवशिष्टं कृत्स्नमपि कुलम् अधर्मः अभिभवति आवृणोति । उतशब्दः अप्यर्थे । स च कृत्स्नपदेन संबध्यते ॥ ४० ॥

ततश्च—

**अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥**

स्पष्टोऽर्थः । कृष्णेत्यनेन '—अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्' इत्यधर्मशिक्षार्थमवतीर्णेन त्वया तदभिभवो न सोढव्य इति सूचितम् । वार्ष्णेयेत्यनेन कुरूणां वृष्णीनां च परस्परसंबन्धितया कुरुकुलसांकर्ये वृष्णिकुलप्रसूतस्य तवानिष्टमिति ध्वनितम् ॥ ४१ ॥

एवं सति—

**संकरो नरकायैव कुलघ्नानां कुलस्य च ।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥**

न केवलं कुलघ्नानां न वा केवलं संकीर्णस्यैव कुलस्य नरकपातः, किं तु तत्पितॄणामपीत्याह— पतन्तीति । अप्यर्थे हिशब्दः । एषां कुलघ्नानां पितरोऽपि लुप्ता पिण्डोदकयोः क्रिया येषां ते तथोक्ताः सन्तो नरके पतन्ति । कुलसंबन्धिनः पितरः पुत्रादिकर्त्रभावेन लुप्त-

पिण्डोदकक्रियाः; कुलघ्नानां पितरस्तु कुलघ्नैर्दत्तानि पिण्डोदकानि नोपभुञ्जीरन्निति लुप्तपिण्डोदकक्रिया इत्यभिप्रायः ॥ ४२ ॥

ननु सांकर्यदोषवशात्कुलस्य नरकोऽस्तु, कुलघ्नानां तु कथं नरक इत्यत आह—

**दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥**

वर्णसंकरकारकैः कुलघ्नानामेतैर्दोषैः शाश्वता वर्णधर्माः कुलधर्माश्च चकारादाश्रमधर्मादयश्च उत्साद्यन्ते विलोप्यन्ते । तथा च वर्णाश्रमादिधर्मनाशकत्वाद्वर्णसंकरकारित्वाच्च कुलघ्नानामपि नरको दुर्निवार इत्यर्थः ॥ ४३ ॥

तर्हि कुलघ्नानामेव नरको युक्तः, न कुलस्येत्यत्राह—

**उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।**
**नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥**

उत्सन्ना विनष्टाः कुलधर्मा एषाम् । जातिधर्मादीनामप्युपलक्षणमिदम् । अनुशुश्रुम श्रुतिस्मृतिमुखाद्वयं श्रुतवन्तः; न तु स्वकल्पनेत्यर्थः । वर्णाश्रमधर्मलोपात्कुलमपि पापिष्ठमेव जातमिति तस्यापि नरकः शास्त्रोक्त इति भावः । ननु वर्णसंकरकारिणं त्वां त्वत्कुलमपि संकीर्णमहं रक्षिष्यामि, किमिति नरकाद्बिभेषीत्यतः संबोधयति— जनार्दनेति । पापिष्ठजनान्निजाज्ञारूपश्रुतिस्मृत्यतिलङ्घितया

त्वमेव नरकयातनाभिरर्दयसीति शास्त्रस्थितिरित्यभिप्रायः ॥ ४४ ॥

एवं कुलक्षयकृतं दोषं प्रदर्श्य तन्निमित्तमात्मानमनुशोचन्नाह—

**अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।**
**यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥**

अहो इत्याश्चर्ये । बतेति खेदे । महत्पापमिति । स्वजनवध एव प्रथमतः पापम्, तदुपरि कुलक्षयदोषो मिलित इति महत्पापमित्यर्थः । कर्तुं व्यवसिता अध्यवसायं कृतवन्तः । वयमिति बहुवचनेन युधिष्ठिरभीमादयोऽप्येतद्बोधयित्वा पापादस्मान्निवर्तनीया इति सूचितम् ॥ ४५ ॥

नन्वेवं युद्धमारभ्य अकस्मान्निर्व्यापारं त्वां प्रसह्य धार्तराष्ट्रा निहन्युरिति चेदिष्टापत्तिः, कुलक्षयपर्यवसितात्स्वजनवधमहापातकतः स्वमरणस्यैव श्रेयस्त्वात् । तच्च मरणं लोके द्वेधा भवति । एकं तावत्परैः सह युध्यमानस्य तैर्मरणम्, अन्यत्तु न्यस्तशस्त्रतया तूष्णीं स्थितस्य परैर्निहननम् । द्विविधमपि तत्स्वजनवधाद्वरिष्ठमेव । तत्रापि द्वितीयं वरिष्ठतरम्, तत्र स्वजनवधस्यैवाप्रसक्तेः पापशङ्कानवकाशात् । प्रथमं त्वनीदृशत्वात्पापशङ्कास्कन्दितम् । अतश्च द्वितीयमेव मरणं ममास्त्वित्यभिप्रेत्याह—

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।**
**धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥**

चिकीर्षितेऽस्मिन्रणे अप्रतीकारम्, प्रयुक्तास्त्रेषु प्रत्यस्त्रप्रयोगः प्रतीकारः, तद्रहितम्, अत्र हेतुः— अशस्त्रं न्यस्तशस्त्रं मां यदि शस्त्रपाणयो धार्तराष्ट्रा हन्युः, तदा तद्धननं मे क्षेमतरं प्रशस्ततरं भवेत्। मे क्षेमतरमित्यनेन न्यस्तशस्त्रहन्तारो धार्तराष्ट्रा एवं पापिष्ठीभवन्तीति सूचितम्। तरप्प्रत्ययस्वारस्यं तूक्तम्॥ ४६॥

इत्थं स्वजनवधव्यामोहाक्रान्तस्यापि कौन्तेयस्य भगवदनुग्रहोपसंपत्स्यमानतत्त्वज्ञानस्य परिशुद्धस्वभावतानपायैवेत्यर्जुनपदेन व्यञ्जयन् धृतराष्ट्रं प्रति संजय उवाच अध्यायार्थमुपसंहरन्—

**एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत्।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः॥ ४७॥**

**इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां**
**योगशास्त्रे श्रीकृष्णार्जुनसंवादे**
**अर्जुनविषादयोगो नाम**
**प्रथमोऽध्यायः॥**

एवमुक्त्वा अर्जुनः सशरं चापं विसृज्य शोकेन संविग्नं कलिलं मानसं यस्य स तथोक्तः सन्, संख्ये युद्धे रथोपस्थे रथोपरि उपाविशत्। अनेन पूर्वं युद्धार्थमवलोकनार्थं चोत्थितोऽभूदिति गम्यते। यद्वा, पूर्वमप्युपविष्टः सन् 'न च शक्नोम्यवस्थातुम्—' इत्युक्तरी-

त्या दृढोपवेशनसामर्थ्यात् रथोपस्थ उपाविशत् रथोपरि पृष्ठमासज्ज्योपविष्टो जात इत्यर्थः ॥ ४७ ॥

इति श्रीमत्परमहंसपरिव्राजकसार्वभौमश्रीमदद्वैतविद्या-
प्रतिष्ठापनाभिनवशंकराचार्यसर्वतन्त्रस्वतन्त्रश्रीमद्राम-
ब्रह्मानन्दतीर्थभगवत्पूज्यपादानां शिष्येण
श्रीवेङ्कटनाथेन कृते ब्रह्मानन्दगिर्या-
ख्याने भगवद्गीताव्याख्याने
प्रथमोऽध्यायः ॥



गम्यते, तथापि कालसंख्याव्याप्तिरुक्तरीत्यावगन्तव्या । एवं रेचकपूरककुम्भकभेदेनोक्तात्प्राणायामत्रयादन्योऽपि चतुर्थः प्राणायामोऽस्ति । सोऽपि कुम्भकाख्य एव । तत्र रेचकपूरकापेक्षस्तृतीयः कुम्भकः । चतुर्थस्तु तदनपेक्षस्तृतीयकुम्भकाभ्यासपाटवजन्मा धारणाख्ययोगाङ्गनिष्पादकः । अत्र निद्रातन्द्रादिदोषयुक्तानां रेचकादित्रयम्, तद्रहितानां तु चतुर्थ इति विवेकः । सोऽयं चतुर्विधः प्राणायामोऽत्र प्रतिपाद्यते । श्लोकस्यायमर्थः—प्राणायामपरायणाः अपरे नियताहाराः 'द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्' इत्यादिशास्त्रनियताहाराः सन्तः प्राणे उच्छ्वासाख्यप्राणवृत्तौ अपानं निश्वासाख्यामपानवृत्तिं जुह्वति प्रक्षिपन्ति; रेचकाख्यप्राणायामं कुर्वन्तीत्यर्थः । तथा अपाने अपानवृत्तौ प्राणं तद्वृत्तिं जुह्वति; पूरकप्राणायामं कुर्वन्ति । एवं रेचकपूरकोक्त्यैव तदविनाभूतः प्राणापानोभयवृत्तिनिरोधरूपः कुम्भकाख्यस्तृतीयः प्राणायामोऽप्यर्थादुक्तो भवति । एतत्प्राणायामत्रयानुवादपूर्वकं चतुर्थं कुम्भकप्राणायाममाह— प्राणापानगती रुद्ध्वा प्राणेषु प्राणानपरे जुह्वति । पूरके प्राणगतेरुच्छ्वासस्य निरोधः, रेचके त्वपानगतेर्निश्वासस्य, कुम्भके तूभयगतिनिरोध इति क्रमेण त्रिष्वपि प्राणापानगती रुद्ध्वा प्राणेषु बाह्याभ्यन्तरकुम्भकाभ्यासनिगृहीतेषु प्राणान् ज्ञानेन्द्रियकर्मेन्द्रियरूपाञ्जुह्वति । सर्वाण्यपि हीन्द्रियाणि प्राणाधीनानि प्राणशब्दवाच्यानि चेति वाजसनेयकादिषु प्रसिद्धम् । तथा च सारथिनिगृहीतरज्जुभिरिव रथाश्वानां कुम्भकनिगृहीतैः प्राणैस्तदधीनचेष्टानां सर्वेन्द्रियाणामपि निग्रहो भवति । सोऽयं निग्रहोऽत्र

प्राणान्प्राणेषु जुह्वतीत्यनेनोच्यते ॥ २९ ॥

एवं दैवयज्ञादिप्राणायामान्तद्वादशविधयज्ञानां वेदने करणे च फलमकरणे दोषं चाह सार्धेन—

**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥**
**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥३१॥**

यज्ञान्विदन्ति जानन्ति लभन्त इति च यज्ञविदो यज्ञाभिज्ञास्तत्कर्तारश्च । त एते सर्वैरपि यज्ञैर्ज्ञातैरनुष्ठितैश्च क्षपितकल्मषाः क्षीणपापा भवन्ति । कर्तारस्तु न केवलं क्षीणपापाः, किं तु यज्ञान्निर्वर्त्य तदवशिष्टममृताख्यमन्नं भुञ्जानाश्चित्तशुद्धिज्ञानद्वारा सनातनं ब्रह्म यान्ति मुच्यन्ते । यस्य तु पुनरेतेषु यज्ञेष्वेकोऽपि यज्ञो नास्ति, तस्यायज्ञस्य अयं सर्वप्राणिसाधारणोऽप्यल्पसुखदो मनुष्यलोकोऽपि नास्ति, शिष्टगर्हितत्वात्; कुतोऽन्यः परलोकोऽनेकसाधनसाध्यः ? तस्मादवश्यं यज्ञाः कर्तव्या इत्यर्थः ॥ ३१ ॥

अत्र वेद एव प्रमाणमित्याह—

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥**

एवमुक्तरीत्या बहुविधा एते यज्ञाः ब्रह्मणो वेदस्य मुखे वितता विस्तृताः । वेदेन साक्षाद्विहिता इत्यर्थः । तानि च वेदवाक्यानि

विस्तरभिया नोदाहृियन्ते । यस्मिन्मुखे वेदो जातस्तस्मिन्नेव मुखे वितता एते यज्ञाः; तथा च वेदवदेते विश्वसितव्या इत्यपि कश्चिदर्थो ध्वन्यते । एवं यज्ञानां प्रामाणिकत्वेनावश्यकर्तव्यत्वमुक्त्वा आत्मनस्तच्छ्लेषाभावं दर्शयति— कर्मजानिति । तान्सर्वान्यज्ञान् कर्मजान्विद्धि कायिकवाचिकमानसिककर्मजानेव जानीहि; न त्वात्मजान्, तस्यासङ्गोदासीनत्वात् 'असङ्गो ह्ययं पुरुषः, असङ्गो न हि सज्जते' इति श्रुतेः । एवमात्मानमकर्तारं ज्ञात्वा कर्मबन्धाद्विमुक्तो भविष्यसि ॥ ३२ ॥

उक्तेषु यज्ञेषु को यज्ञः श्रेष्ठ इत्याकाङ्क्षायामाह—

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

अत्र द्रव्यमयाद्यज्ञादित्येतज्ज्ञानयज्ञातिरिक्तसर्वकर्मयज्ञोपलक्षणार्थम्, सर्वं कर्मेति वाक्यशेषात् । कर्मयज्ञापेक्षया ज्ञानयज्ञः श्रेयान्प्रशस्ततरः; यस्मात् सर्वम् अग्निहोत्रदर्शपूर्णमासादिकं श्रौतम् अखिलं निरवशेषमौपासनादिकं स्मार्तं च कर्म; यद्वा सर्वमिति कर्मकाण्डोक्तमशेषमग्निहोत्राद्यात्मकम् अखिलमित्युपासनाकाण्डोक्तमनवशेषमुपासनात्मकं च कर्म, ज्ञाने ब्रह्मात्मैक्यसाक्षात्कारे परिसमाप्यते अन्तर्भवति ज्ञानोपेक्षितचित्तशुद्धिसंपादनेन ज्ञाने पर्यवस्यति, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिश्रुतेः । अतः प्राधान्याज्ज्ञानयज्ञ एव श्रेयानित्यर्थः । पार्थेत्यनेनैव संबोधनसिद्धावपि परंतपेत्यनेन—यथा शत्रुसंतापकतया त्वमखिलेष्वपि पार्थेषु मुख्यः, तथा ज्ञानयज्ञो-

ऽपि संसाराख्यशत्रुसंतापकतया सर्वयज्ञेषु मुख्य इति व्यज्यते ॥

एतादृशज्ञानावाप्तावुपायः क इत्यत्राह—

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

तत् सर्वकर्मफलभूतं ज्ञानम् आचार्यानभिगम्य तेषां प्रणिपातेन ; प्रकर्षेण नीचैः पतनं प्रणिपातो दीर्घनमस्कारः । ततः परिप्रश्नेन ; परितः सर्वतोऽवलोक्य गुरोः प्रसादावगत्या प्रश्नः कथं बन्धः कथं मोक्षः का विद्या का चाविद्येति । ततः सेवया उपदेशावसरानुवर्तनेन च प्राप्यत इति विद्धि । एवमावर्जिताः सन्तो ज्ञानिनः शास्त्रनिपुणाः तत्त्वदर्शिनः अपरोक्षानुभवसंपन्नाश्चाचार्याः ते तुभ्यं ज्ञानम् उपदेक्ष्यन्ति उपदेशेन संपादयिष्यन्ति । अनुभवनिष्ठैरेवोपदिष्टं ज्ञानं कार्यक्षमम् , न तु केवलशास्त्रज्ञैरिति दर्शयितुं तत्त्वदर्शिन इति विशेषणम् ; ‘तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्’ इति श्रुतेः । अत्र श्रोत्रियमधीतवेदं ब्रह्मनिष्ठं ब्रह्मसाक्षात्कारिणमिति हि व्याख्यातम् । तत्त्वदर्शिन इति च बहुवचनं पूजायाम् ; न त्वाचार्यबहुत्वाभिप्रायेण, एकस्मादेव तत्त्वदर्शिनो ज्ञानोदये सत्यन्याभिगमनवैयर्थ्यात् । उपदेक्ष्यन्तीति च स्वयमुपदिशत्येव भगवति पारोक्ष्यनिर्देशः ॥ ३४ ॥

एवं संपादितस्य ज्ञानस्य फलमाह सार्धैस्त्रिभिः—

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

यत् ज्ञानं ज्ञात्वा । 'पाकं पचति' इतिवदेकस्यैव धातोः सामान्यविवक्षया पुनः प्रयोगः । प्राप्येति यावत् । एवम् इदानीमिव मोहं बन्धुवधादिनिमित्तं भ्रमं न पुनर्यास्यसि । तत्र हेतुः— येन ज्ञानेन भूतानि भीष्मद्रोणादीनि अर्थो अपि च अशेषेण कार्त्स्न्येन सर्वं जगदपि आत्मनि त्वयि द्रक्ष्यसि 'मदविद्याकल्पितोऽयं भीष्मादिप्रपञ्चो मद्व्यतिरेकेण नास्ति' इत्युपलप्स्यसे । ननु परब्रह्मणि त्वयि खलु प्रपञ्चः कल्पितः; तत्राह— मयीति । मद्रूपे त्वदात्मनीत्यर्थः ॥ ३५ ॥

ननु पापप्रतिबन्धे जाग्रति कथमेवं दर्शनं स्यात्? तत्राह—

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥**

अपि चेदित्यसंभाविताभ्युपगमप्रदर्शनार्थौ निपातौ । यद्यपि त्वय्यसंभावितोऽयमर्थः, तथापि ज्ञानमाहात्म्यवर्णनायाभ्युपेत्योच्यते । सर्वेभ्यः पापकृद्भ्यः अतिशयेन पापकृत्त्वमसि, तथापि सर्वं वृजिनं दुस्तरत्वेनार्णवसदृशं ज्ञानलक्षणप्लवेनैव सम्यगनायासेन तरिष्यसि ॥ ३६ ॥

'तरिष्यसि' इत्युक्त्या समुद्रवत्स्थितस्यैव पापस्यातिलङ्घनमात्रं न तु नाश इति मा मंस्था इत्याह—

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥**

एधांसि काष्ठानि शुष्काण्यार्द्राणि च सम्यगिद्धः प्रज्वलितः अग्निः यथा भस्मीभावं नयति, तथा ज्ञानरूपोऽग्निः सर्वकर्माणि पापानि पुण्यानि च भस्मसात्कुरुते तत्कारणाज्ञाननाशेन निर्बीजत्वं नयति ; 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' 'क्षीयन्ते चास्य कर्माणि' इत्यादिश्रुतेः। यद्यपि 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुत्या 'अनारब्ध-कार्ये एव तु पूर्वे तदवधेः' 'तदधिगम उत्तरपूर्वाघयोरश्लेषवि-नाशौ तद्व्यपदेशात्' इत्यादिब्रह्ममीमांसान्यायैश्च ज्ञानोत्पादकदेहा-रम्भकस्य प्रारब्धफलकर्मणो भोगेनैव तद्देहान्ते नाशः ; संचितागा-मिनां तु ज्ञानेन विनाश इति व्यवस्थापितम्। तथाप्युत्तरपूर्वाघयो-रिव प्रारब्धकर्मणोऽपि मूलाज्ञाननाशेन निर्बीजस्यैव सतः 'तस्य तावत्' इति श्रुत्यन्यथानुपपत्त्या दग्धपटन्यायेन भोगप्रदत्वस्य तत्र प्रतिपादनात्सर्वकर्मणां निर्बीजतापादनरूपं भस्मीकरणं न विरुध्यत इति ध्येयम् ॥ ३७ ॥

ननु ज्ञानेनेव कर्मणापि पापक्षयः श्रूयते, 'सर्वपाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्यादिश्रुतेः ; अतः कर्मा-पेक्षया ज्ञानस्य को वातिशयः ? तत्राह—

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**

हि यस्मात्कारणाज्ज्ञानं कर्ममूलभूताज्ञानविनाशनेन निर्बीजत्वरूपं कर्मभस्मीभावं संपादयति, न तु कर्मवदुपरिप्लवतयैव पापं मार्ष्टि, यदाहुः— 'कर्मणा कर्मनिर्हारो नैवात्यन्तिक इष्यते' इति ;

तस्मात् ज्ञानेन समूलपापनिवर्तकेन सदृशं पवित्रं पापशोधकम् इह कर्मणां मध्ये न विद्यते ॥ ३८ ॥

एतादृशं ज्ञानं किमिति न सर्वेषां झटित्युत्पद्यत इत्यत्राह सार्धेन—

**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥३८॥**
**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥**

तत् ज्ञानं योगसंसिद्धः पूर्वोक्तेन कर्मयोगेण योग्यतामापन्नः तत्परिपाचकेन कालेन स्वयमेव अनायासेन स्वात्मनि विन्दति लभते ; न तु कर्मयोगं विनेत्यर्थः । सत्यपि कर्मयोगे श्रद्धादिरहितस्य ज्ञानं नास्ति, तस्य ज्ञानान्तरङ्गसाधनत्वात् ; अतस्तदावश्यिकमित्याह— श्रद्धावानिति । गुरूपदिष्टार्थे इदमित्थमेवेत्यास्तिक्यबुद्धिः श्रद्धा, तद्वाञ्श्रद्धालुः । एतादृशस्याप्यालस्ये वृथैव श्रद्धा भवति ; अत आह— तत्पर इति । तदेकनिष्ठ इत्यर्थः । श्रद्धालुस्तत्परोऽपि प्रामादिकादिन्द्रियपारवश्यात् 'वायुर्नावमिवाम्भसि' इत्युक्तन्यायेन ज्ञानाच्च्यवत इति संयतेन्द्रिय इत्युक्तम् । तादृशः पुरुषोऽवश्यं ज्ञानं लभते । तर्हि ज्ञानसाधनकर्मानुष्ठानानन्तरं ज्ञानस्येव मोक्षसाधनज्ञानलाभानन्तरं मोक्षस्य विलम्बोऽस्ति ? नेत्याह— ज्ञानमिति । ज्ञानं लब्ध्वा परां शान्तिम् अविद्यातत्कार्यनिवृत्तिरूपां मुक्तिम् अचिरेण अव्यवधानेनैव प्राप्नोति ; न हि दीपोदयानन्तरमन्धकारनिवृत्तौ विलम्बोऽस्तीत्यर्थः ॥ ३९ ॥

अत्र च संशयो न कर्तव्यः, तस्य सर्वानर्थमूलत्वादित्याह—

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥**

अज्ञः अनधीतशास्त्रतयात्मज्ञानशून्यः । अश्रद्दधानस्तु गुरूपदिष्टार्थे इदमित्थं न भवतीति विपर्ययरूपनास्तिक्यबुद्धिमान् । संशयात्मा तु इदमेवं भवति न वेति सर्वत्र संशयाविष्टचित्तः । एते त्रयोऽपि भ्रष्टपुरुषार्थतया नश्यन्त्येव । संशयात्मा तु विनश्यति विशेषेण नश्यति । यतः संशयात्मनः नायं लोकोऽस्ति न च परलोकः; ततो न किंचिदपि सुखमस्ति । अज्ञाश्रद्दधानयोरामुष्मिकमेव सुखं नास्ति, तयोर्भोजनाद्यैहिकसुखसत्त्वात् । संशयात्मनस्तु नोभयमपि । संशयस्य परस्परविरुद्धकोटिद्वयावलम्बित्वेन यदा संसारसुखाय प्रवृत्तिस्तदा मोक्षमार्गप्रवृत्तिस्तां प्रतिबध्नाति, यदा मोक्षाय प्रवृत्तिस्तदा संसारप्रवृत्तिस्तां निरुणद्धीति । एवमन्यत्रापि । तस्मात्संशयात्मा सर्वतः पापिष्ठ इत्यर्थः ॥ ४० ॥

अध्यायार्थमुपसंहरति—

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥**

अतीताध्यायद्वयोक्तं कर्मज्ञानयोगप्रपञ्चनं चतुर्थाध्यायार्थः । तत्र योगसंन्यस्तकर्माणमित्यनेन तृतीयाध्यायार्थप्रपञ्चोपसंहारो दर्शितः । योगेनेश्वराराधनार्थकर्मानुष्ठानलक्षणेन संन्यस्तानि भगवति समर्पितानि

कर्माणि येन तं तथोक्तम् । ज्ञानसंछिन्नसंशयमित्यनेन द्वितीयाध्यायार्थ-प्रपञ्चोपसंहारः । ज्ञानेन तत्त्वंपदार्थैक्यविषयकेण कर्मयोगफलभूतेन सं-छिन्नाः संशयाः 'छिद्यन्ते सर्वसंशयाः' इत्यादिश्रुतिप्रसिद्धया येन तं तथोक्तम् । अत एव 'आत्मलाभान्न परं विद्यते' इत्यादिश्रुति-प्रसिद्धपरमपुरुषार्थलाभवत्त्वादात्मवन्तं मुक्तं कर्माणि न निबध्नन्ति ॥

एवमध्यायार्थमुपसंहृत्य अर्जुनस्य तदनुष्ठेयतामुपदिशति—

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥**

यस्मात्कर्मज्ञानयोगी मुच्यते, यस्माच्च संशयः पापीयान्, त-स्मात् आत्मनो यदज्ञानमविवेकस्तेन संभूतं हृदि स्थितमेनं शोका-दिनिमित्तं संशयं ज्ञानासिना विवेकखड्गेन च्छित्वा योगं कर्मज्ञान-रूपम् आतिष्ठ आश्रय । तत्र च प्रथमं कर्मयोगमेव ज्ञानसिद्ध्य-र्थमाचरेत्याह— उत्तिष्ठेति । युद्धायोत्तिष्ठ । भारतेत्यनेन भरतवं-शोद्भवस्य तव स्वविहितं युद्धानुष्ठानमेव 'सुखदुःखे समे कृत्वा' इत्यादिप्रागुक्तरीत्या कर्मयोग इति दर्शितम् ॥ ४२ ॥

इति श्रीमत्परमहंसपरिव्राजकसार्वभौमश्रीमदद्वैतविद्या-
प्रतिष्ठापनाभिनवशंकराचार्यसर्वतन्त्रस्वतन्त्रश्रीम-
द्रामब्रह्मानन्दतीर्थभगवत्पूज्यपादानां शिष्येण
श्रीवेङ्कटनाथेन कृते ब्रह्मानन्दगिर्याख्याने
भगवद्गीताव्याख्याने चतुर्थोऽध्यायः ॥

———— ❀ ————

# पञ्चमोऽध्यायः ॥

---

चतुर्थेऽध्याये कर्मज्ञानयोगौ प्रपञ्चितौ । पञ्चमे तु संन्यासस्वरूप-निरूपणमुखेन तावेव प्रपञ्च्येते । तत्र 'शारीरं केवलं कर्म कुर्व-न्नाप्नोति किल्बिषम्' इत्यादिना कर्मसंन्यास उक्तः, पुनः 'योग-मातिष्ठोत्तिष्ठ' इति कर्मयोगश्च । तयोर्यत्प्रशस्यं तदेवानुष्ठेयमिति तद्बुभुत्सया

**अर्जुन उवाच—**

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥**

अयमत्रार्जुनस्याभिप्रायः— कर्मसंन्यासकर्मयोगौ भवतोपदिष्टौ । तयोः किमेकपुरुषानुष्ठेयत्वं किं वा भिन्नपुरुषानुष्ठेयत्वम् ? नाद्यः ; कर्मतत्त्यागयोः स्थितिगतिवत्परस्परविरुद्धत्वेन युगपदेकस्य तदनुष्ठा-नासंभवात् । न च कालभेदेन तत्संभवति, विद्वदविद्वदवस्थाभेदेन विरक्त्यविरक्त्यवस्थाभेदेन वा संन्यासकर्मयोगयोरेकत्राविरोधादिति वाच्यम् ; विद्वत्संन्यासस्य विद्योत्तरकालिकत्वेन ज्ञानाङ्गत्वाभावात्, 'त्यजतैव हि तज्ज्ञेयम्' इत्यादिश्रुत्युक्तस्य ज्ञानार्थसंन्यासस्यैवात्र वि-चार्यमाणत्वात्, विरक्तस्यैव कर्मयोगेऽप्यधिकारित्वेन संन्यासकर्मयो-गयोर्विरक्त्यविरक्त्यवस्थाभेदव्यवस्थाया अप्ययोगात् । अत एक-पुरुषानुष्ठेयत्वपक्षे युगपत्कालभेदेन वा तयोरनुष्ठानासंभवादर्थादन्य-

तरकर्तव्यताप्राप्तौ यत्प्रशस्तं तदेव कर्तव्यमिति तदेकमेव मां प्रत्यु-
पदेष्टुमुचितम् , न तु द्वयमपि । अत एव न द्वितीयः ; कर्मसंन्या-
सयोर्भिन्नपुरुषानुष्ठेयत्वे अन्यतरानुष्ठानाय मां प्रत्येकस्यैवोपदेष्टव्यत्वा-
त् । तथा च पक्षद्वयेऽपि कर्मसंन्यासयोर्मध्ये प्रशस्तमिदमेव त्वदनु-
ष्ठेयमिति निश्चित्य वक्तव्यमिति । यद्यपि 'तदेकं वद निश्चित्य
येन श्रेयोऽहमाप्नुयाम्' इति प्रश्ने 'नियतं कुरु कर्म त्वम्' 'कुरु
कर्मैव तस्मात्त्वम्' इत्यादिना कर्मैव प्रशस्तं मदनुष्ठेयमुक्तम् ; तथापि
तदुपरि पुनः पुनः कर्मसंन्यासप्रशंसनान्ममेत्थं प्रतिभाति— कर्म-
योग एव प्रथमं मया किमित्यनुष्ठेयः संन्यास एव कुतो नानुष्ठी-
यत इति । न च 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । न
च संन्यसनादेव सिद्धिं समधिगच्छति' इत्यकर्मणश्चित्तशुद्धिहीनस्य
वैराग्यासंभवात्प्रथमं संन्यासो दूषित इति वाच्यम् ; विरक्तस्यैव क-
र्मयोगेऽधिकारित्वेन वैराग्यासंभवे प्रथमं कर्मयोगस्याप्यसिद्ध्या तद-
र्थमादौ वैराग्यस्यावश्यसंपाद्यत्वे सति कर्मयोगवत्कर्मसंन्यासस्यापि
प्रथममविरोधात् । तस्मात् 'कुरु कर्मैव' इत्यादिपूर्वतनत्वदुपदेशेन
मम न सम्यगध्यवसायो जात इति तदर्थमिदानीं वक्तव्यमिदमेव
प्रशस्यमनुष्ठेयमिति । तदेतदभिप्रेत्य श्लोके सुनिश्चितमित्युक्तम् ।
सुष्ठु निश्चितं यथा तथा ब्रूहीत्यर्थः । संन्यासं पुनर्योगं च शंससी-
त्यनेन संन्यासकर्मयोगयोरेकपुरुषानुष्ठेयत्वपक्षे विरोधो दर्शितः ।
एकं ब्रूहीत्यनेन तयोर्भिन्नपुरुषानुष्ठेयत्वे मां प्रत्येकमेवोपदेष्टव्यमित्ये-
तद्दर्शितम् । यच्छ्रेय एतयोरित्यनेन च पक्षद्वयेऽपि फलितः प्र-
श्नार्थो दर्शितः ॥ १ ॥

अत्रोत्तरं

**श्रीभगवानुवाच—**

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥**

अनेन श्लोकेन 'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि' इत्यस्य प्रथममुत्तरमुच्यते । संन्यासः कर्मयोगश्चेत्युभावपि ज्ञानहेतुत्वेन मोक्षहेतू । तयोर्मध्ये त्वादृशस्य मुमुक्षोरविदुषः प्रथमं कर्मसंन्यासात्कर्मयोग एव विशिष्यते विशिष्टः प्रशस्तो भवति ॥ २ ॥

कर्मवैशिष्ट्यमत आह—

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥**

सुखं बन्धात्प्रमुच्यत इति । 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' इति वक्ष्यते । अतः संन्यासापेक्षया सुखेन बन्धमोचकत्वात्ततः प्रशस्तमित्यर्थः । किं च कर्मयोगे संन्यासस्यान्तर्भूतत्वादपि ततस्तस्य प्राशस्त्यमित्याह— ज्ञेय इति । यः परमेश्वरार्पणबुद्ध्यानुष्ठीयमानं कर्म निष्फलत्वशङ्कया न द्वेष्टि ; तथा न काङ्क्षति स्वर्गादिकम् । तत्र हेतुः— निर्द्वन्द्वः रागद्वेषशून्यः स नित्यसंन्यासी ज्ञेयः कर्मणि प्रवृत्तोऽपि नित्यं संन्यासी कृतसंन्यास एव ज्ञेयः । हि यस्मादेवं तस्मात्सुखेन मोचकत्वादन्तर्गर्भितसंन्यासत्वाच्च कर्मयोगो विशिष्यत इति पूर्वेणान्वयः ॥ ३ ॥

ननु कर्मणि प्रवृत्तः कथं संन्यासी ज्ञातव्यः कर्मतत्त्यागयोः स्वरूपविरोधात् ? तत्राह द्वाभ्याम्—

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

बालाः अज्ञाः सांख्ययोगौ, संख्या सम्यगात्मबुद्धिः तां वहतीति सांख्यः संन्यासः, योगः पूर्वोक्तकर्मयोगः, तौ पृथग्विरुद्धफलौ प्रवदन्ति; न पण्डिता ज्ञानिनः । किं तर्हि तेषां मतम् ? तत्राह— एकमपीति । कर्मसंन्यासयोर्मध्ये एकमप्यास्थितः स्वाधिकारानुगुण्येन यथाशास्त्रमनुष्ठितवान् उभयोः फलं ज्ञानद्वारा मोक्षरूपं विन्दते प्राप्नोति ॥ ४ ॥

ननु कथमेकानुष्ठानादुभयोः फलं प्राप्नुयात् ? अत आह—

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥**

सांख्यैः ज्ञाननिष्ठैः संन्यासिभिः यत्स्थानं मोक्षाख्यं प्राप्यते प्रकर्षेण साक्षादवाप्यते, तत् योगैर्योगिभिरपि । अर्शआदित्वादच्प्रत्ययः । संन्यासप्राप्तिद्वारेणावाप्यते । अतः सांख्यं संन्यासं कर्मयोगं च एकफलकत्वादेकं यः पश्यति, स एव सम्यक्पश्यति, नान्यः । तस्मात्कर्मिणः संन्यासित्वमुपपद्यत इति भावः ॥ ५ ॥

एवम् 'ज्ञेयः स नित्यसंन्यासी' इत्येतदुपपादितम् । इदानीम्

'सुखं बन्धात्प्रमुच्यते' इत्येतदुपपादयन्कर्मसंन्यासयोरेकपुरुषानुष्ठेयत्वं भिन्नपुरुषानुष्ठेयत्वं वेति प्राक्पृष्टयोरुत्तरमाह—

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६ ॥**

अयोगतः कर्मयोगं विना तु संन्यासः प्राप्तुं दुःखं दुःखहेतुः; अशक्य इति यावत्, कर्मानुष्ठानजन्यचित्तशुद्ध्यभावे संन्यासहेतुवैराग्याभावात् । यद्वा योगं विना कृतः संन्यासो दुःखमाप्तुमेव भवति, चित्तशुद्ध्यभावेन ज्ञाननिष्ठाया असंभवात् शोधके च कर्मण्यनधिकारात्; अतः कर्मब्रह्मोभयभ्रष्टत्वेन तस्य महत्संकटमेव स्यादित्यर्थः । कर्मयोगयुक्तस्तु चित्तशुद्धिवैराग्यसंपत्त्या मुनिः संन्यासी भूत्वा ब्रह्म सत्यज्ञानानन्दात्मकम् अचिरेणाधिगच्छति साक्षात्करोति । अतः कर्मयोगं विना संन्यासस्य दुष्करत्वात्कथंचित्कृतस्यापि तस्यानर्थकरत्वेन फलवत्त्वाभावाच्च सुकरः शीघ्रफलदश्च कर्मयोगस्ततो विशिष्यत इत्यज्ञस्य मुमुक्षोः प्रथमं कर्मयोग एवानुष्ठेयो न तु संन्यासः; स तु वैराग्यतीव्रतायां स्वयमेव भविष्यतीति । 'न कर्मणाम्' इत्यस्यैवायं प्रपञ्चः । अत्र कर्मयोगस्यान्वयव्यतिरेकाभ्यां संन्यासहेतुत्वोक्त्या कर्मसंन्यासयोरङ्गाङ्गिभावप्रदर्शनात्तयोरेकपुरुषानुष्ठेयत्वमुक्तं भवति । न च विरोधाद्युगपदेकस्य तदनुष्ठानासंभव इति वाच्यम्; कालभेदेन तत्संभवात् । युज्यते खल्वविरक्तिदशायां कर्मयोगो विरक्तिदशायां संन्यासश्च । न च कर्मयोगस्यापि वैराग्याधिकारत्वाद्विरक्त्यविरक्त्यवस्थाभेदेन

कर्मतत्त्यागव्यवस्था न युक्तेति वाच्यम्; कर्मयोगहेतुवैराग्यात्संन्यासहेतुवैराग्यस्य भिन्नत्वात् । तीव्रतरं हि वैराग्यं संन्यासहेतुः । यथातितीव्रायां बुभुक्षायामुत्पन्नायां भोजनादन्यो व्यापारो न रोचते, भोजने च विलम्बो न सोढुं शक्यते; तथा संसारविरतावतितीव्रायामुत्पन्नायां संन्यासं विनान्यन्न रोचते, संन्यासे च विलम्बो न सह्यते । तदेतादृशे तीव्रतरे वैराग्ये संन्यासः, तदभावे कर्मयोग इति व्यवस्थासंभवान्न कोऽपि विरोधः ॥ ६ ॥

ननु 'योगयुक्तो मुनिर्ब्रह्माधिगच्छति' इत्युक्तमयुक्तम्, कर्मणो बन्धहेतुत्वादित्यत आह—

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

निष्कामतयेश्वरार्पणबुद्ध्यानुष्ठीयमानं कर्म योगः । तेन युक्तः पुरुषः विशुद्धात्मा निर्मलान्तःकरणः, तथा विजितात्मा वशीकृतदेहः जितेन्द्रियश्च सन् । अनेन 'शरीरवाङ्मनोभिर्यत्कर्म प्रारभतेऽर्जुन' इति वक्ष्यमाणत्रिविधकर्मलेपाभावः सूचितः । एतादृशस्य तत्त्वज्ञानमवश्यंभावीत्याह— सर्वभूतात्मभूतात्मा सर्वेषां भूतानां ब्रह्मादिस्तम्बान्तानामात्मभूत आत्मा यस्य स तथोक्तः, अद्वितीयात्मतत्त्वदर्शीति यावत् । एवंभूतः कुर्वन्नपि लोकानुग्रहार्थं स्वाभाविकं वा कर्म, न लिप्यते न बध्यते । यत्त्वत्र मधुसूदनसरस्वतीभिरुक्तम्— 'सर्वभूतानामात्मभूत आत्मा यस्येति भा-

ष्यकारीयव्याख्याने सर्वभूतात्मेत्येतावतैवार्थलाभाद्भूतात्मेत्यधिकम् । अतः सर्वात्मपदाभ्यां जडाजडे विवक्षित्वा सर्वभूत आत्मभूतश्चात्मा स्वरूपं यस्येति व्याख्यानं समञ्जसम् । चेतनाचेतनात्मकं सर्वमात्ममात्रं पश्यतीत्यर्थः' इति, तदसत्; सर्वभूतात्मभूत इत्येतावतैवार्थलाभेन भवद्व्याख्यानेऽपि द्वितीयात्मपदवैयर्थ्यात् । चेतनाचेतनात्मकं सर्वमात्ममात्रं पश्यतीत्यर्थलाभायात्मपदं सार्थकमिति चेत्, सर्वभूतात्मभावापन्नस्वात्मदर्शित्वरूपार्थलाभाय भूतात्मपदमपि सार्थकमिति समानम् । वस्तुतस्तु भवद्व्याख्यान एवासामञ्जस्यम्; सर्वपदेनैव चेतनाचेतनलाभेन प्रथमात्मपदवैयर्थ्यात् सर्वात्मेति द्वन्द्वान्तश्रुतद्वितीयभूतपदेनैव सर्वभूत आत्मभूत इत्यर्थलाभेन प्रथमभूतपदवैयर्थ्याच्चेति न किंचिदेतत् । तस्माद्यथाभाष्यमेव व्याख्यानमनवद्यम् ॥

'कुर्वन्नपि न लिप्यते' इत्युक्तम्; कुतो न लिप्यत इत्यतः कर्तृत्वाभिमानाभावादित्याह द्वाभ्याम्—

**नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥**

**प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥**

युक्तः समाहितः तत्त्ववित् नैव किंचित्करोमीति मन्येत मन्यते चिन्तयति, अतो न लिप्यत इति संबन्धः । तर्किं तत्त्ववित्किमपि

न पश्यति न शृणोति येन न किंचित्करोमीत्यनुचिन्तयेत्? अत आह— पश्यन्निति । चक्षुरादिज्ञानेन्द्रियैर्वागादिकर्मेन्द्रियैः प्राणादिवायुभेदैरन्तःकरणचतुष्टयेन च क्रियमाणेषु कर्मसु, इन्द्रियाण्येव इन्द्रियार्थेषु स्वस्वविषयेषु वर्तन्ते न त्वहमिति धारयन् नैव किंचित्करोमीति मन्येतेति योजना । अत्र दर्शनश्रवणस्पर्शनघ्राणाशनानि चक्षुःश्रोत्रत्वग्घ्राणरसनानां पञ्चज्ञानेन्द्रियाणां व्यापाराः पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्नित्युक्ताः । गच्छन्प्रलपन्विसृजन्गृह्णन्नित्यनेन तु पञ्चकर्मेन्द्रियाणां व्यापारा उक्ताः । तत्र गतिः पादयोः, प्रलापो वाचः, विसर्गः पायूपस्थयोः, ग्रहणं हस्तयोरिति विवेकः । श्वसन्निति प्राणादिपञ्चकव्यापरोपलक्षणम । उन्मिषन्निमिषन्निति नागकूर्मादिवायुपञ्चकान्तरव्यापारोपलक्षणम्; 'उद्गारे नाग आख्यातः कूर्म उन्मीलने तथा । कृकरस्तु क्षुते ज्ञेयो देवदत्तो विजृम्भणे ॥ न जहाति मृतं वापि सर्वव्यापी धनंजयः' इति स्मृतेः । स्वपन्नित्यन्तःकरणचतुष्टयव्यापरोपलक्षणम् । एवमर्थक्रमवशात्पाठक्रमं भङ्क्त्वा व्याख्यातोऽयं श्लोकः ॥ ८९ ॥

नन्वस्त्वेवं तत्त्वदर्शिनः कर्तृत्वाभिमानाभावात्कर्मभिरलिप्तता; योगयुक्तस्य तु कर्तृत्वाभिमानसत्त्वात्कर्मलेपो दुर्वार इत्यत आह—

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

ब्रह्मणि परमेश्वरे आधाय भृत्य इव स्वाम्यर्थमहमीश्वराय कर्म

करोमीति बुद्ध्या समर्प्य मोक्षेऽपि फले सङ्गमभिलाषं त्यक्त्वा यः कर्माणि करोति, सः पापेन पापपुण्यात्मकेन कर्मणा न लिप्यते न बध्यते, यथा पद्मपत्रमुपरि प्रक्षिप्तेनाम्भसा न लिप्यते तद्वत् ॥

अस्मिन्नर्थे शिष्टाचारं प्रमाणयति—

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥११॥**

कायेन वचनादि मनसा ध्यानं बुद्ध्या तत्त्वनिश्चयः इन्द्रियैः श्रवणकीर्तनादिकमित्येवंरूपं कर्म योगिनः कर्मिणः फलेच्छां त्यक्त्वा आत्मशुद्धये चित्तशुद्ध्यर्थं कुर्वन्ति । अत्र केवलैरित्येतत्काय-मनोबुद्धीन्द्रियाणां चतुर्णामपि विशेषणम् । ईश्वरार्थमेवेदं कर्म क्रियते न तु मत्फलार्थमित्येवंलक्षणं ममताशून्यत्वं केवल-शब्दार्थः ॥ ११ ॥

कर्तृत्वाभिमानसाम्येऽप्येकेनैव कर्मणा कश्चिन्मुच्यते कश्चिद्बध्यत इत्येतद्वैषम्ये हेतुमाह—

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥**

युक्तः ईश्वरार्थमेवेदं कर्म न मदर्थमित्येवं समाहितः कर्मफलं त्यक्त्वा कर्म कुर्वन् ज्ञानद्वारा नैष्ठिकीमात्यन्तिकीं शान्तिं मोक्षाख्या-माप्नोति । अयुक्तः पूर्वोक्ताद्युक्तादन्यः फले सक्तः कामकारेण,

कारः करणम्, कामप्रयुक्तकर्मानुष्ठानेनेति यावत् । निबध्यते ॥

एवं तावच्चित्तशुद्धिरहितस्य संन्यासात्कर्मयोगो विशिष्यत इत्येतत्प्रपञ्चितम् । इदानीं शुद्धचित्तस्य संन्यासः श्रेष्ठ इत्याह—

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

वशी जितचित्तः सर्वकर्माणि नित्यनैमित्तिककाम्यप्रतिषिद्धरूपाणि सर्वाण्यपि कर्माणि मनसा 'कर्मण्यकर्म यः पश्येत्' इति प्रागुक्तेनाकर्त्रात्मदर्शनेन संन्यस्य परित्यज्य सुखं जीवन्मुक्तिरूपं यथा भवति तथा आस्ते, विद्वत्संन्यासस्य जीवन्मुक्तिहेतुत्वात् । ननु सर्वोऽपि ज्ञानकर्मेन्द्रियैस्तत्तत्कर्माणि सर्वदा कुर्वन्नेवावतिष्ठते, शरीरं च प्रकृत्या चेष्टाश्रयः; तत्कथं नित्यं कुर्वद्रूपस्य सर्वकर्मसंन्यासः स्यात् 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्युक्तेः ? अत आह— नवद्वारे पुर इति । नेत्रे नासिके कर्णौ मुखं चेति सप्त शिरोगतानि द्वाराणि, अधो द्वे पायूपस्थरूपे; इत्येवं नव द्वाराणि यस्मिंस्तस्मिन् पुर इव पुरे 'यदिदमस्मिन्ब्रह्मपुरे' इत्यादिश्रुतिप्रसिद्धे देहे प्रवासीव परगृहे तत्पूजापरिभवादिभिरहृष्यन्नविषीदन्नहंकारममकारशून्यः स्वयं नैव कुर्वन्न कारयन्नास्ते । एतदुक्तं भवति— देहेन्द्रियादिषु कर्म कुर्वाणेषु तत्तादात्म्याध्यासरूपाहंकारादहमेव करोमीत्यज्ञो मन्यते, 'अहंकारविमूढात्मा कर्ताहमिति मन्यते' इत्युक्तेः । तदा पुत्र-

भार्यादिषु ममकारात्तेषु कुर्वत्स्वहमेतैः कारयामीति मूढः प्रतिपद्यते। ज्ञानी त्वहंकारममकाराभावान्न तथा प्रतिपद्यते; किं तु 'इन्द्रियाणीन्द्रियार्थेषु' इत्युक्तरीत्या निष्क्रियात्मरूप एवावतिष्ठते। तथा च देहेन्द्रियादिव्यापाराणां निष्क्रियात्मन्यविद्ययाध्यासितानां विद्यया बाध एव सर्वकर्मसंन्यासो नामेति न कोऽपि दोषः। तदेतद्देहीत्यनेन सूचितम्। देहेन्द्रियाद्यतिरिक्तात्मदर्शीत्यर्थः। अन्यो हि देहैक्याध्यासाद्देह एव, न तु देही। यद्यप्यहं गेहीतिवदहं देहीत्येव सर्वस्य प्रतीतिः; न तु देहोऽहमिति; तथापि गौरोऽहं कृशोऽहं स्थूलोऽहं गच्छामीत्यादिबहुतरप्रतीत्यनुरोधात् 'पूर्वपूर्वभ्रमोत्पन्नवासनाया बलेन तु। देहेन्द्रियादिसंघाते जायतेऽहंमतिर्दृढा' इत्यादिस्मृत्यनुरोधाच्च देहैक्याध्यासे सिद्धे देहीति प्रतीतिः 'प्रतिमाया देहः' इतिवदुपचार इत्यन्यत्र विस्तरः॥ १३॥

'नैव कुर्वन्न कारयन्' इत्युक्तम्। किमेतत्कर्तृत्वं कारयितृत्वं चात्मनि स्वाभाविकमेव सत्सर्वकर्मसंन्यासान्नास्ति यथा स्वाभाविकी गतिरगच्छतः, किं वा स्वत एवात्मनि नास्तीति संदेहापनोदायाह—

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते॥ १४॥**

प्रभुः पूर्वोक्तनवद्वारपुरस्वामी जीवात्मा लोकस्य लोक्यमानस्य देहादेः कर्तृत्वं न सृजति त्वं कुर्विति नियोजनेन तस्य कारयिता न भवतीत्यर्थः। नापि लोकस्य कर्माणि ईप्सिततमानि घटादीनि स्वयं सृजति, कर्तापि न भवतीत्यर्थः। नापि कर्म कुर्वतो लोकस्य

तत्फलसंबन्धं सृजति, भोजयितापि न भवतीत्यर्थः । तथा च श्रुतिः 'ध्यायतीव लेलायतीव' इत्यादि । वक्ष्यते चात्रापि— 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इत्यादि । यद्यात्मा स्वयं किंचिन्न कारयति न करोति, कस्तर्हि कारयन्कुर्वन्प्रवर्तते ? तत्राह— स्वभावस्तु प्रवर्तते स्वभावो मायाविद्याप्रकृतिरूपः प्रवर्तते ॥ १४ ॥

एतदेव विवृणोति—

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

विभुः पूर्वश्लोकोक्तः प्रभुरात्मा कायवाङ्मनसानां मध्ये कस्यचित्कायस्य वाचो मनसो वा कर्मभूतं पापं नैवादत्ते परमार्थतो न गृह्णाति, तथा कस्यचित्सुकृतं च नादत्ते । कथं तर्हि पुण्यकृत्पापकृदयमिति लोकव्यवहारः ? तत्राह— अज्ञानेनेति । ज्ञानं नित्यशुद्धबुद्धमुक्तस्वभावपरब्रह्मरूपाद्वितीयप्रत्यगात्मचैतन्यम् अज्ञानेन नीहारमायाप्रकृत्यविद्यापरपर्यायेण 'न तं विदाथ य इदं जजानान्यद्युष्माकमन्तरं भवाति । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति' इत्यादिश्रुतिप्रसिद्धेन आवृतमाच्छादितम् । तेनावरणेन जन्तवः जननशीलाः संसारिणः मुह्यन्ति अतस्मिंस्तदवभासरूपं मोहं गच्छन्ति । ततस्तन्मूलक एवोक्तव्यवहारः, तदनुवादिन्य एव च श्रुतिस्मृतयः पारमार्थिकाद्वैतवाक्यशेषभूता इति भावः ॥ १५ ॥

कथं तर्ह्यज्ञानमूढानां विमोक्षः ? तत्राह—

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

तदज्ञानं तु आत्मनो ज्ञानेन गुरूपदिष्टवेदान्तमहावाक्यजन्येनाद्वितीयात्मविषयकेण नाशितं येषाम्, तेषां तज्ज्ञानं कर्तृ तत्परं सत्यज्ञानानन्दाद्वितीयात्मकब्रह्मात्मतत्त्वरूपं निरतिशयं वस्तु प्रकाशयति आदित्यवत् यथादित्यस्तमो निरस्य सर्वं वस्तुजातं प्रकाशयति तद्वत् । अत्र 'तेन मुह्यन्ति' 'ज्ञानेन नाशितम्' इत्यनेन भ्रमोपादानत्वं ज्ञाननिवर्त्यत्वं चाज्ञानस्य लक्षणमित्युक्तं भवति । आद्ये परिणाम्युपादानत्वस्य विवक्षितत्वान्न ब्रह्मण्यतिव्याप्तिः; द्वितीये च ज्ञानत्वेन साक्षाज्ज्ञाननिवर्त्यत्वस्य विवक्षितत्वाज्ज्ञानप्रागभावे अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्ये प्रपञ्चे च नातिव्याप्तिरित्यद्वैतव्रजप्रपञ्जरे विस्तरः । यत्त्वत्र रामानुजेनोक्तम्— 'तेषामादित्यवज्ज्ञानमिति विनष्टाज्ञानानां बहुत्वाभिधानादात्मस्वरूपमुक्तम्' इति, तदसत्; 'देहभेदाभिप्रायेण बहुवचनम्' इति द्वितीयाध्यायभाष्योक्तभगवत्पादश्रीसूक्त्यैव दत्तोत्तरत्वात्, विनष्टाज्ञानानामपि 'तस्य तावदेव चिरम्' इत्यादिश्रुत्या प्रारब्धवशेन देहानां सत्त्वात्, 'येषां नाशितमात्मनः' इत्येकवचनेनात्मैक्यस्य कण्ठरवेणोक्त्या येषां तेषामिति बहुवचनस्यानात्मबहुत्वविषयकतावगमाच्च; तेषामिति प्रत्यक्षप्रापितदेहानुवादेन प्रकाशयतीत्यंशे विधिपरस्यास्य भेदपरत्वासंभवाच्च । एतादृशबहुवचनदर्शनेनैव स्वमतं द्वैतं बहुमन्यमानेन त्वया 'नवद्वारे पुरे देही'

'अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः' इत्यादावेकवचनदर्शनेन रोदितव्यम्, तदन्यथासिद्धिकरणे च बहुवचनस्यापि तथैवान्यथासिद्धिः सुकरेति तस्य परं प्रति बाधकत्वोपन्यासो जघन्य इति लज्जितव्यं वेत्यन्यतरावश्यंभावाच्च । यत्पुनरत्र माध्वेनोक्तम्— 'अज्ञानमिह ज्ञानाभाव एव न तु भावरूपम्' इति, यच्च रामानुजेन— 'अनादिकालप्रवृत्तानन्तकर्मसंचयरूपमज्ञानम्' इति; तत्र माध्वं प्रत्येतद्वक्तव्यम्— 'पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात्' इत्यधिकरणे त्वयापि भावरूपाज्ञानव्यवस्थापनादिह तन्निराकरणं परावशकुनार्थस्वनासाच्छेदन्यायमावहतीति । विस्तरस्तु वज्रपञ्जरे द्रष्टव्यः । रामानुजं तु प्रत्येतद्वाच्यम्— स्मृतिपुराणादिष्वज्ञानं माया प्रकृतिरविद्येति पर्यायत्वेन प्रसिद्धस्याज्ञानशब्दस्य प्रसिद्धार्थं विहाय कर्मवाचित्वकल्पनमप्रामाणिकमन्याय्यम् । किं च आत्मावारकस्य कर्मणः सादित्वे तत्पूर्वमनावृतात्मतत्त्वसाक्षात्कारस्य ततः कर्मक्षयस्य चावश्यिकत्वेन 'अज्ञानेनावृतं ज्ञानम्' इत्युक्तेरसंगतिः; तस्यानादित्वे तु आत्मावारकस्यानादेर्ज्ञाननिवर्त्यस्य मोहहेतोः कर्मेति परिभाषामात्रमित्यस्मदिष्टसिद्धिरिति ॥ १६ ॥

'ज्ञानेन तु तदज्ञानम्' इति पूर्वोक्तज्ञानोत्पत्तौ कारणं तत्फलं चाह—

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥**

अत्र तद्बुद्धय इत्यादौ पूर्वपूर्वं प्रत्युत्तरोत्तरस्य हेतुत्वम् । तथा हि— तत्परायणाः । तच्छब्देन 'प्रकाशयति तत्परम्' इति पूर्वोक्तमात्मतत्त्वमुच्यते । तदेव परमयनं प्राप्यं येषां ते तत्परायणाः । सर्वतो विरक्ता इत्यर्थः । ततस्तन्निष्ठाः तस्मिन्नेवात्मतत्त्वे निष्ठा स्थितिर्येषां ते तन्निष्ठाः । अनेन सर्वकर्मसंन्यासपूर्वकश्रवणमननपरिपाको दर्शितः । ततस्तदात्मानः तस्मिन्नेवात्मतत्त्वे आत्मा विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहरूपं मनो येषां ते तदात्मान इति निदिध्यासनोक्तिः । ततस्तद्बुद्धयः तत्साक्षात्कारवन्तः सन्तः अपुनरावृत्तिं पुनर्देहसंबन्धाभावरूपां मुक्तिं गच्छन्ति । अत्र हेतुः— ज्ञानेन निर्धूतं समूलमुन्मूलितं पुनर्देहकारणं कल्मषं पुण्यपापात्मकं कर्म येषां ते तथोक्ताः ॥ १७ ॥

ज्ञानस्य द्वे फले विदेहकैवल्यं जीवन्मुक्तिश्चेति । देहपातादनन्तरं विदेहमुक्तिः, ततः पूर्वं जीवन्मुक्तिः । तत्र विदेहमुक्तिः पूर्वमुक्ता । जीवन्मुक्तिमाह—

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

विद्याविनयाभ्यां युक्ते ब्राह्मणे श्वपाके शुनां पाचके च कर्मवैषम्यम् । गवि हस्तिनि शुनि चेति जातिवैषम्यम् । एवं विषमेष्वपि समदर्शिनः सममेकरूपमविक्रियं ब्रह्मैव द्रष्टुं शीलं येषां ते समदर्शिनः पण्डिता ज्ञानिनः । यथा हि गङ्गोदके तडागे सुरायां मूत्रे च

प्रतिबिम्बितस्य सूर्यस्य न तद्गुणदोषसंबन्धः ; तथा ब्रह्मणोऽपि सर्वगतस्य नोपाधिगुणदोषसंबन्धः इत्यनुसंदधानाः सर्वत्र समदृष्ट्यैव रागद्वेषराहित्येन परमानन्दस्फूर्त्या जीवन्मुक्तिमनुभवन्तीत्यर्थः ॥

ननु विषमेषु समदर्शनं धर्मशास्त्रनिषिद्धं कुर्वाणाः कथं पण्डिताः ? तथा च गौतमः स्मरति— 'समासमाभ्यां विषमे पूजातः' इति । अस्यार्थः— समाय पूज्याय विषमप्रकारे पूजने कृते सति, विषमाय अपूज्याय च समप्रकारे कृते सति, स पूजक इहलोकात्परलोकाच्च हीयत इति । तत्राह—

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि परं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥**

इहैव जीवनदशायामेव तैः सर्गो जितः सृज्यत इति सर्गः संसारप्रपञ्चोऽतिक्रान्तः ; देहपातादूर्ध्वमतिक्रम्यत इति किमु वक्तव्यम् ? कैः ? येषां मनः साम्ये समत्वे सर्वभूतेषु विषमेष्वपि वर्तमानस्य ब्रह्मणः समभावे स्थितं निश्चलम् । तत्र हेतुः— हि यस्मात् ब्रह्म सममेकं निर्दोषं च, तस्मात् ते समदर्शिनः ब्रह्मण्येव स्थिताः । अयं भावः— दुष्टत्वं हि द्वेधा भवति । अदुष्टस्यापि दुष्टसंबन्धाद्यथा गङ्गोदकस्य मूत्रसंबन्धात्, स्वत एव वा यथा मूत्रादेः । तत्र नाद्यः ; यतः श्वपाकादिषु ब्रह्म तद्दोषेण दुष्यतीति मूढैर्विभाव्यमानमपि सर्वदोषासंस्पृष्टमेव, व्योमवदसङ्गत्वात् 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतेः । अत एव नान्त्यः । तस्मान्निर्दोषब्रह्मरूपा यतयो जी-

वन्मुक्ता न दोषगन्धेनापि स्पृश्यन्ते । गौतमस्मृतिस्तु अविद्वद्गृहस्थ-विषयैव, 'तस्यान्नमभोज्यम्' इत्युपक्रमात् 'पूजातः' इति मध्ये निर्देशात् 'धर्माद्धीयते' इत्युपसंहाराच्चेति ॥ १९ ॥

अथास्य ब्रह्मणि स्थितस्य स्थितप्रज्ञस्य लक्षणमाह पञ्चभिः—

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥**

प्रियमिष्टं प्राप्य न प्रहृष्यति, अप्रियमनिष्टं प्राप्य च नोद्विजति न विषीदति । जीवन्मुक्तस्य स्वाभाविकं चरितं मुमुक्षोः प्रयत्नपूर्वक-मनुष्ठेयमिति दर्शयितुं न प्रहृष्येन्नोद्विजेदिति लिङ्प्रत्ययप्रयोगः । प्रहर्षोद्वेगाभावे हेतुमाह— ब्रह्मणि स्थित इति । निर्दोषे समे ब्रह्मण्येवाद्वितीयात्मरूपे स्थितः, नान्यत्र । अतस्तस्य द्वैतप्रति-भासाभावान्न प्रियाप्रियप्राप्तिरस्तीति न तन्निमित्तहर्षोद्वेगप्रसक्ति-रित्यर्थः । ब्रह्मणि स्थितौ हेतुः— स्थिरबुद्धिरित्यादि । अत्र ब्रह्म-विदिति श्रवणप्रदर्शनम्, असंमूढ इति संमोहराहित्योक्त्या असं-भावनाविपरीतभावनाख्यसंमोहनिवर्तकमनननिदिध्यासनप्रदर्शनम् । ततः स्थिरबुद्धिरित्यात्मतत्त्वसाक्षात्कारः, ततो ब्रह्मणि स्थितिर्जीव-न्मुक्तिरिति हेतुहेतुमद्भावो द्रष्टव्यः ॥ २० ॥

लक्षणान्तरमाह—

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥**

स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयाः । ते च बाह्या अनात्मधर्मत्वात् । तेष्वसक्तात्मा अनासक्तचित्तः सन् तृष्णाशून्यतया आत्मन्यन्तःकरण एव बाह्यविषयनिरपेक्षं यदुपशमसुखं तद्विन्दति सत्त्ववृत्त्या लभते; 'यच्च काममुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्' इति स्मृतेः । न केवलमुपशमसुखमेव लभते; किं त्वखण्डब्रह्मसुखमपीत्याह— स इति । स तृष्णाशून्यः तत्पदार्थभेदानुभवरूपेण ब्रह्मयोगेण युक्तः समाहित आत्मा मनो यस्य तथाभूतः सन् अक्षयमनन्तं सुखं प्राप्नोति । अनेनाखण्डनिजात्मसुखनिष्ठत्वं जीवन्मुक्तस्य लक्षणम्, तदर्थिनो मुमुक्षोः साधकस्य बाह्यविषयप्रीतिपरित्यागः साधनमिति चोक्तं भवति ॥ २१ ॥

विषयप्रीतिनिवृत्तावुपायमाह—

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥**

संस्पर्शजाः विषयेन्द्रियसंपर्कजाः ये इह वा परत्र वा भोगाः क्षुद्रसुखानुभवाः, ते सर्वेऽपि आद्यन्तवन्तः अस्थिराः । आदिर्विषयेन्द्रियसंपर्कः, अन्तस्तद्वियोगः । पूर्वं पश्चादप्यसन्तो मध्यैकक्षणमात्रवर्तिनः । तदापि दुःखस्यैव योनयः कारणभूताः, वर्तमानकालेऽपि रागद्वेषस्पर्धादिकराम्बितत्वात् । तदिदमुक्तं विष्णुपुराणे— 'यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावन्तोऽस्य नि-

खन्यन्ते हृदये शोकशङ्कवः '. इति । अतो न तेषु बुधो विवेकी रमते । हि यस्मादेवं तस्मात् बाह्यस्पर्शेष्वसक्तात्मेति पूर्वेण संबन्धः ॥ २२ ॥

तत्र च कामक्रोधवेगः श्रेयोमार्गस्य मुख्यो वैरी सर्वानर्थहेतुर्दुर्निवारोऽतिकष्ट इति मुमुक्षूणां महता यत्नेन तन्निवारणं कार्यमिति दर्शयितुं पुनराह—

**शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥**

कामक्रोधावुद्भवः कारणं यस्य तं तथोक्तं वेगमिव वेगम् । यथा हि नद्या वेगो वर्षास्वतिप्रबलः स्वसंबन्धिनमनिच्छन्तमपि गर्ते पातयित्वा निमज्ज्याधो नयति ; तथा कामक्रोधयोरपि वेगो मनोनेत्रादिक्षोभरूपो विषयाभिध्यानेन वर्षाकालस्थानीयेनातिप्रबलः स्वसंबन्धिनमनिच्छन्तमपि विषयगर्ते निपात्य संसारार्णवे निमज्ज्याधो नरकं नयतीति वेगपदेन ध्वन्यते । एतच्च 'अथ केन प्रयुक्तोऽयम्' इत्यत्र भगवतैव स्पष्टमुक्तम् । तमेनं कामक्रोधवेगम् इहैव बहिरिन्द्रियव्यापाररूपाद्गर्तपातात्प्रागेव सेतुनेव नदीवेगं विषयदोषदर्शनाभ्यासजन्यवैराग्येण यः सोढुं स्वानुरूपकार्याजनकत्वेनानर्थकं कर्तुं शक्नोति । तत्किं क्षणमात्रम्? नेत्याह— प्राक्शरीरविमोक्षणात्, यावद्देहपातमित्यर्थः । स एव युक्तो योगी, स एव सुखी, स एव नरः । तदितरस्त्वाहारनिद्राभयमैथुनादिपशुधर्ममात्रनिरतत्वान्मनुष्याकारः पशुरेवेत्यर्थः । श्रीधराचार्यैस्तु प्राक्शरीरवि-

मोक्षणादित्यत्रान्यद्व्याख्यातम्— 'यथा मरणादूर्ध्वं विलपन्तीभिर्युवतीभिरालिङ्गयमानोऽपि पुत्रादिभिर्दह्यमानोऽपि प्राणशून्यत्वात्कामक्रोधवेगं सहते, तथा मरणात्प्रागपि जीवन्नेव यः सहते स युक्तः' इति। भवेदेवं यद्यत्र मरणवज्जीवनेऽपि कामक्रोधानुत्पत्तिमात्रं विवक्षितं स्यात्; यथा वासिष्ठे— 'प्राणे गते यथा देहः सुखदुःखं न विन्दति। तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत्' इति। इह तूत्पन्नयोः कामक्रोधयोर्वेगसहनं विवक्षितम्। अतो न तदनुत्पत्तिदृष्टान्त इति यथाभाष्योक्त एवार्थः॥ २३॥

जीवन्मुक्तस्य लक्षणान्तरमाह—

**योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति॥ २४॥**

एवकारस्य त्रिष्वपि संबन्धः। अन्तःसुखः अन्तरव स्वात्मनि सुखं यस्य न विषयेषु सोन्तःसुखः, अत एव अन्तरारामः अन्तः स्वात्मन्येव आरामः क्रीडा न बहिर्यस्य सोऽन्तरारामः। सर्वसङ्गत्यागिनोऽपि यदृच्छोपनतकोकिलादिमधुरशब्दश्रवणमन्दपवनस्पन्दनसान्द्रचन्द्रिकापातकैतकामोदमेदुरमधुरशीतलगङ्गोदकपानादिषु बहिरप्यारमणसंभवात्कथमन्तरारामत्वम्? तत्राह— अन्तर्ज्योतिरिति। अन्तरेव स्वात्मनि ज्योतिर्दृष्टिर्न बहिर्यस्य सोऽन्तर्ज्योतिः। समाधिकाले शब्दादिप्रतिभानाभावाद्व्युत्थानकाले तत्प्रतिभानेऽपि मिथ्यात्वनिश्चयिनस्तस्य 'न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी। ना-

गरं नागरीकान्तं कुग्रामललना इव' इति वासिष्ठोक्तरीत्या रतिकरत्वाभावान्नान्तरारामत्वविरोध इत्यर्थः। एवंविधो यः स योगी ब्रह्मनिर्वाणम् 'ब्रह्म वेद ब्रह्मैव भवति' 'स एव तदभवत्' इत्यादिश्रुतिशतप्रतिपन्नं ब्रह्मरूपं निर्वाणं मोक्षमधिगच्छति प्राप्नोति। तर्किं देवदत्त इव ग्राममप्राप्तमेव ब्रह्म प्राप्नोति? नेत्याह— ब्रह्मभूत इति। स्वयं ब्रह्मरूप एव सन्नज्ञानवशादप्राप्तमिव स्थितं ब्रह्म प्राप्नोति, 'ब्रह्मैव सन्ब्रह्माप्येति' इत्यादिश्रुतेः 'अवस्थितेरिति काशकृत्स्नः' इति ब्रह्ममीमांसान्यायाच्चेति भावः॥ २४॥

एवं स्थितप्रज्ञस्य लक्षणान्युक्त्वा संप्रति ज्ञानसाधनान्याह—

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः।**
**छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः॥ २५॥**

ऋषयः तत्त्वदर्शिनः ब्रह्मनिर्वाणं लभन्ते। 'ऋषी तत्त्वार्थदर्शने' इति धातुः। तत्त्वदर्शने हेतवः क्षीणकल्मषा इत्यादिनोच्यन्ते। छिन्नद्वैधाः छिन्नसंशयाः, संयतात्मानो जितेन्द्रियाः, सर्वभूतहिते रताः अहिंसकाः। श्रवणादिसाधनानाम् 'स्थिरबुद्धिरसंमूढो ब्रह्मवित्' इत्यनेनैवोक्तत्वादत्र यथाश्रुतमेव व्याख्यातम्॥ २५॥

अध्यायार्थमुपसंहरति—

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम्।**
**अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम्॥ २६॥**

कामक्रोधवियुक्तानामित्यनेन 'यो न द्वेष्टि न काङ्क्षति' इति प्रागुक्तो निष्कामकर्मयोगः प्रदर्शितः। यतचेतसामित्यनेन तत्फलमन्तःकरणशुद्धिरुक्ता। ततो य[illegible]ामिति तत्फलभूतः संन्यासः। विदितात्मनामित्यनेन तत्फलं ज्ञानम्। तदनेन कर्मज्ञानयोरङ्गाङ्गिभावेन क्रमसमुच्चयप्रतिपादनरूपोऽध्यायार्थ उपसंहृतो भवति। अभितो ब्रह्मनिर्वाणमित्यनेन ज्ञाननिष्ठाफलमुक्तम्। अभितः उभयतो जीवतां मृतानां च जीवन्मुक्तिविदेहमुक्तिरूपं निर्वाणं वर्तत इत्यर्थः ॥ २६ ॥

अथेदानीं ज्ञानसाधनं ध्यानयोगमुत्तराध्याये निरूपयिष्यन्नुपाक्षिपति द्वाभ्याम्——

**स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥**
**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥**

बाह्या एव शब्दादयः स्पर्शाः। ते तु रागवशाच्छ्रोत्रादिद्वारा तत्तदाकारवृत्तिभिरन्तः प्रविशन्ति। तेषां वैराग्येण बहिर्निर्यातनं बहिष्कारः। अनेन योगाभ्यासेन प्रथमकारणं वैराग्यमुक्तम्। एवं स्पर्शान्बहिष्कृत्वा योगियोग्यासने ऋजुकाय उपविश्य चक्षुषी भ्रुवोरन्तरे, कृत्वेत्यनुषङ्गः। अत्यन्तं नेत्रयोर्निमीलने निद्रया मनो लीयेत, उन्मीलने च बहिः प्रसारणाद्विक्षेपः स्यात्। तदुभयदोषपरिहारायार्धनि-

मीलनेन नासाग्रे दृष्टिं विन्यस्य, तथा उच्छ्वासनिश्वासरूपेण नासाभ्यन्तरचारिणौ प्राणापानौ कुम्भकेनोर्ध्वाधोगतिनिरोधात्समौ कृत्वा। यद्वा प्राणो यथा बहिर्न निर्याति यथा चापानोऽन्तर्न प्रविशति किं तु नासामध्य एव द्वावपि यथा चरतः, तथा मन्दाभ्यामुच्छ्वासनिश्वासाभ्यां समौ कृत्वा। अनेनोपायेन यताः संयता इन्द्रियमनोबुद्धयो यस्य स तथा, मोक्षपरायणः सर्वविषयविरक्तः, अत एव विगतेच्छाभयक्रोधः 'वीतरागभयक्रोधः' इत्यत्र व्याख्यातः। एवंभूतो यो मुनिर्योगी स सर्वदा मुक्त एव। नास्य मोक्षार्थं किंचित्कर्तव्यमवशिष्यत इत्यर्थः ॥ २७-२८ ॥

एवं योगमुपदिश्य तत्फलमाह—

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥**

मां ज्ञात्वा शान्तिं मोक्षं प्राप्नोतीति प्रथमं सबन्धः। तर्हि त्वां पश्यन्नपि नाहं मुक्तोऽस्मीत्याशङ्क्य विशिनष्टि—भोक्तारमित्यादिना। एवंरूपेणैव मम ज्ञानं मुक्तिहेतुरिति भावः। यज्ञतपसां भोक्तारम्। यो हि यस्य फलमनुभवति स तद्भोक्ता। यज्ञानां तपसां च भगवत्प्रीतिः फलम्; 'तत्कुरुष्व मदर्पणम्' इति हि वक्ष्यति। अतस्तत्प्रीत्यनुभवितृत्वात्तद्भोक्तारम्। नन्विन्द्रादयोऽपि तत्तद्यज्ञभोक्तारः; तद्वदेव किं त्वमपि कश्चिद्यज्ञभोक्ता; नेत्याह— सर्वलोकमहेश्वरम् इन्द्रादिसर्वनियन्तारम्। नन्वेतादृशपारम्यशाली कथमस्माभिः प्री-

णनीयः? तत्राह— सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतयोपकारिणम् । ईदृशस्य हि प्रीणनमतिसुलभमतिसुखं च लोकानां भवति, सुहृदाराधनरूपत्वात् । एवंविधं मां ज्ञात्वा ध्यानयोगेन हृदि साक्षात्कृत्य मत्प्रसादप्राप्ततत्त्वज्ञानो मुच्यत इत्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकसार्वभौमश्रीमदद्वैतविद्या-
प्रतिष्ठापनाभिनवशंकराचार्यसर्वतन्त्रस्वतन्त्रश्रीम-
द्रामब्रह्मानन्दतीर्थभगवत्पूज्यपादानां शिष्येण
श्रीवेङ्कटनाथेन कृते ब्रह्मानन्दगिर्याख्याने
भगवद्गीताव्याख्याने पञ्चमोऽध्यायः ॥



## षष्ठोऽध्यायः ॥

---

पञ्चमेऽध्याये संन्यासनिरूपणमुखेन ज्ञानयोगः सपरिकरः प्रपञ्चितः । षष्ठे तु ध्यानयोगाख्यसाधननिरूपणमुखेन स एव ज्ञानयोगः प्रपञ्च्यते । तत्र तावत् 'आरुरुक्षोर्मुनेर्योगम्' इति योगसाधनत्वेन कर्म विधातुं प्रथमं कर्मयोगिणं द्वाभ्यां स्तुवन्

**श्रीभगवानुवाच—**

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥**

कर्मणां फलमनाश्रितः अनपेक्षमाणः फलाभिसंधिरहितः सन् कार्यं कर्तव्यतया शास्त्रविहितमग्निहोत्रादिकर्म यः करोति, स एव संन्यसी च योगी च भवति । संन्यासो हि त्यागः, चित्तविक्षेपाभावश्च योगः; तावुभावस्य विद्येते फलत्यागात्फलतृष्णारूपचित्तविक्षेपाभावाच्च । न तु निरग्निः न चाक्रियः संन्यासी योगी चेति मन्तव्यः । अत्र अक्रिय इत्यनेन क्रियासामान्याभावोक्तौ तेनैव सर्वकर्मसंन्यासलाभान्निरग्निपदं व्यर्थं स्यादित्यग्निपदेन कर्माण्युपलक्ष्य निरग्निरिति संन्यासी, क्रियापदेन चित्तवृत्तिमुपलक्ष्य अक्रिय इति निरुद्धचित्तवृत्तिर्योगी च कथ्यते । तेन निरग्निः संन्यासी न मन्त-

व्यः, अक्रियश्च योगी न मन्तव्य इति यथासंख्यमुभयव्यतिरेको द्रष्टव्यः ॥ १ ॥

ननु निरग्नेरक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु संन्यासित्वं योगित्वं च प्रसिद्धम्; तत्कथमिह साग्नेः सक्रियस्य च संन्यासित्वं योगित्वं चोच्यते, कथं च 'न निरग्निः-' इति तयोस्तन्निषिध्यत इत्याशङ्क्याह—

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥**

हे पाण्डव, यं संन्यासम् 'न्यास एवात्यरेचयत्' इति प्राहुः, तं निष्कामकर्मानुष्ठानाख्यं योगमेव जानीहि । कुत इत्यत आह— न हीति । असंन्यस्तसंकल्पः अपरित्यक्तफलाभिसंधिः कश्चिदपि योगी न भवति । किं तु सर्वोऽपि योगी त्यक्तफलसंकल्प एव । हि यस्मादेवं तस्मात्फलत्यागसाम्यात्तृष्णारूपचित्तवृत्तिनिरोधसाम्याच्च गौण्या वृत्त्या कर्म्येव संन्यासी योगी चेति स्तूयते, 'अब्रह्मदत्तं ब्रह्मदत्त इत्याह; ते वयं मन्यामहे ब्रह्मदत्तसदृशोऽयमिति' इति महाभाष्योक्तन्यायात् । 'न निरग्निर्न चाक्रियः' इति च निरग्नेरक्रियस्य च न वस्तुतः संन्यासित्वं योगित्वं च प्रतिषिध्यते; किं तु 'अपशवो वा अन्ये गोऽश्वेभ्यः पशवो गोऽश्वाः' इतिवत्प्रशंसामात्रपरमिति न कश्चिद्विरोध इति भावः ॥ २ ॥

एवं कर्मयोगं स्तुत्वा तस्य ध्यानयोगसाधनत्वमाह—

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

योगं ध्यानयोगम् आरुरुक्षोः आरोढुमिच्छोः मुनेर्भविष्यतः निष्कामतयेश्वरार्पणबुद्ध्यानुष्ठितं कर्म चित्तशुद्धिद्वारा योगारोहणे कारणमुच्यते । योगारूढस्य तस्यैव पूर्वं कर्मिण एव सतः शमः सर्वकर्मसंन्यासः चित्तशुद्धिवैराग्यातिशयसंपत्स्यमाने ज्ञानोदये कारणमुच्यते ॥ ३ ॥

कदा योगारूढो भवतीत्यत्राह—

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥**

इन्द्रियार्थेषु शब्दादिषु कर्मसु च तत्साधनेषु लौकिकवैदिकेषु यदा नानुषज्जते कर्तव्यतानुबन्धं न करोति । तत्र हेतुः— सर्वसंकल्पसंन्यासी । इदमहं करिष्य इति चित्तवृत्तिविशेषः संकल्पः । सर्वशब्देन संकल्पहेतोः कामस्य परिग्रहः । निखिलकामसंकल्पत्यागशीलो दृढवैराग्य इत्यर्थः । यदा एवंभूतो भवति तदा योगारूढ इत्युच्यते ॥ ४ ॥

अथास्य योगारूढत्वस्य मन एव मुख्यसाधनमित्याह त्रिभिः—

**उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥**

आत्मना मनसा आत्मानं जीवमुद्धरेदिति प्रथमं संबन्धः । कः पुनरात्मनोऽनर्थः प्राप्तो यतः स उद्धर्तव्य इत्याशङ्क्य उद्धरेदिति-पदसूचितमनर्थं दर्शयितुमाह— नात्मानमवसादयेत् । संसारसागर-पतितमात्मानमधोऽधः पातनेन न विनाशयेदित्यर्थः । तर्हि तत्र मनः किं करिष्यतीत्यत्राह— आत्मैव ह्यात्मनो बन्धुः । हि यस्मान्मन एव जीवस्य हितकारी बन्धुः । न ह्यन्यः कश्चिद्बन्धुः संसारमुक्तये भवति ; लौकिकस्य बन्धोरपि स्नेहानुबन्धेन बन्धहेतुत्वात् । अतो मन एव जीवस्य योगारूढत्वसंपादनेन तारकमिति भावः । नन्वेवं तर्हि तारकं मनः सर्वेषामप्यस्त्येवेति सर्वेऽपि संसारात्किमिति नोत्तरेयुः ? तत्राह— आत्मैव रिपुरात्मनः । न सर्वमपि मनः सर्वस्य मित्रम् ; किं तु कस्यचित्किंचिन्मित्रं कस्यचित्किंचिदमित्रम् । अतो न सर्वेषामप्युत्तरणमित्यर्थः । बाह्यस्यापि रिपोरात्मप्रयुक्तत्वादात्मैव रिपुरित्यवधारणम्, जितमनसो बहिःशत्रुप्रसक्तेरभावादिति ध्येयम् ॥ ५ ॥

कीदृशं मनस्तावदात्मनो मित्रं कीदृशं वाप्यमित्रम्? तत्राह—

**बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।**
**अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥**

येन आत्मना जीवेन य आत्मा जितः यन्मनो विषयप्रावण्य-विनिवर्तनेन स्ववशीकृतम्, तस्यात्मनो जीवस्य स एवात्मा मनो बन्धुः । अनात्मनः अजितमनसो जीवस्य स एवात्मा मनः बाह्य-

लौकिकशत्रुवत्स्वयमपि शत्रुत्वे शत्रुभावे वर्तते। तथा च स्मृतिः—'मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम्' इतीति भावः ॥ ६ ॥

जितात्मनो बन्धुत्वं विवृणोति—

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः।**
**शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७ ॥**

शीतोष्णसुखदुःखेषु पूजापरिभवयोश्च जितात्मनो जितमनसः, अत एव प्रशान्तस्य रागादिशून्यतया निर्विकारस्य, एवंभूतस्यैव परं केवलम् आत्मा समाहितो योगारूढो भवति। यद्वा परमात्मेत्येकं पदम्। परमेश्वर एतादृशस्य समाधिविषयो भवतीत्यर्थः ॥

अथ योगारूढस्य लक्षणमाह द्वाभ्याम्—

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥**

ज्ञानमौपदेशिकम्, विज्ञानमपरोक्षानुभवः, ताभ्यां तृप्तः संजातालंप्रत्यय आत्मा चित्तं यस्य स तथोक्तः; ततः कूटस्थः विषयसंनिधावपि निर्विकारः; तत एव विजितानि रागद्वेषपूर्वकाद्विषयग्रहणाद्व्यावर्तितानीन्द्रियाणि येन सः; तत एव च हेयोपादेयबुद्धिशून्यत्वेन समानि लोष्टाश्मकाञ्चनानि मृत्खण्डपाषाणस्वर्णानि यस्य सः योगी युक्तो योगारूढ इत्युच्यते ॥ ८ ॥

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥**

प्रत्युपकारमनपेक्ष्य स्नेहसंबन्धं च विनैवोपकर्ता सुहृत् । मित्रं स्नेहेनोपकारी । निष्कारणमपकारकृदरिः । विवदमानयोरुभयोरप्युपेक्षक उदासीनः । उभयोरपि हितैषी मध्यस्थः । उपकारिण्यप्यपकर्ता द्वेष्यः । शरीरसंबन्धी बन्धुः । धर्मशीलाः साधवः । पापशीलाः पापाः । एतेषु सुहृदादिषु चकारादन्येष्वपि समबुद्धिः कः कीदृश इत्यव्यापृतबुद्धिः, एवंलक्षणो योगारूढः सर्वेभ्योऽपि योगिभ्यो विशिष्यते विशिष्टो भवति ॥ ९ ॥

इत्थं योगमारुरुक्षोः कर्मानुष्ठानं योगारूढस्य सर्वकर्मसंन्यासं तत्साधनं तल्लक्षणं चोक्त्वा इदानीं योगाङ्गानि निरूपयत्यष्टभिः—

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥**

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥११॥**

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥**

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥**

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥**

**युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥**

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥**

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥**

रहसि एकान्ते गिरिगुहादौ स्थितः । तत्रापि न सद्वितीयः, किं त्वेकाकी । स्मर्यते हि— 'एको भिक्षुर्यथोक्तः स्याद्द्वौ चैव मिथुनं भवेत् । त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते । नगरं हि न कर्तव्यं ग्रामो वा मिथुनं तथा । राजवार्तां हि तेषां स्याद्भैक्षी वार्ता परस्परम्' इति । एकाकिनोऽप्यसंयतचित्तस्य मनोविक्षेपान्नगरमेव भवति ; अतो यतचित्तात्मा यतौ संयतौ योगप्रतिबन्धकव्यापारशून्यौ चित्तदेहौ यस्य स तथोक्तः । तत्र हेतुः—

निराशीः वितृष्णः । अत एव अपरिग्रहः शास्त्रनिषिद्धेन योगविरोधिना परिग्रहेण रहितः । एवंविधो योगी योगारूढः सततम् आत्मानं चित्तं युञ्जीत समाहितं कुर्यादित्यर्थः । अत्रेयं योगशास्त्रप्रक्रिया प्रथमं तावदवगन्तव्या— योगश्चित्तवृत्तिनिरोधः । तस्याष्टावङ्गानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभेदात् । तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहार्जवक्षमाधृतिमिताहारशौचानि यमाः । तपःसंतोषास्तिक्यदानेश्वरपूजनसिद्धान्तश्रवणह्रीमतिजपव्रतानि नियमाः । स्वस्तिकपद्मासनादीन्यासनानि । प्राणवृत्तिनिरोधः प्राणायामः । इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः । सर्वाह्येन्द्रियस्य मनस एकत्र चिरमवस्थापनं धारणा । ध्येयाकारवृत्तिप्रवाहोऽन्तरान्तरान्याकारप्रत्ययव्यवहितो ध्यानम् । सर्वथा विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहः समाधिः । स तु चित्तभूमिभेदेन द्विविधः संप्रज्ञातोऽसंप्रज्ञातश्चेति । चित्तस्य हि पञ्च भूमयो भवन्ति— क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति । तत्र विषयासक्तं चित्तं क्षिप्तम् । निद्रातन्द्रादिग्रस्तं मूढम् । सर्वदा विषयासक्तमपि कदाचिद्ध्याननिष्ठं क्षिप्ताद्विशिष्टतया विक्षिप्तम् । तत्र क्षिप्तमूढयोः समाधिशङ्कैव नास्ति । विक्षिप्ते तु चेतसि कदाचिद्भवन्नपि समाधिर्विक्षेपप्राधान्यात्तीव्रपवनविक्षिप्तप्रदीपवत्स्वयमेव नश्यति । एकाग्रं त्वेकविषयकधारावाहिकवृत्तिसमर्थं सत्त्वोद्रेकेण तमोगुणकृतनिद्रातन्द्रादिरूपलयाभावाद्रजोगुणकृतचाञ्चल्यरूपविक्षेपाभावाच्चैकविषयकधारावाहिकवृत्तिरिति शुद्धे सत्त्वे भवति चित्तमेकाग्रम् । अस्यां भूमौ संप्रज्ञातः समाधिः । तत्र ध्येयाकारवृत्तिरपि

भासते । तस्यापि निरोधे निरुद्धं चित्तमसंप्रज्ञातसमाधिभूमिः । अयमेव सर्वतो विरक्तस्य योगिनः समाधिफलमपि सुखमनपेक्षमाणस्य दृढभूमिरात्मतत्त्वसाक्षात्कारहेतुः । तदेतदष्टश्लोक्यात्र निरूप्यते । तत्र तावत् 'नात्यश्नतस्तु योगोऽस्ति–' इति श्लोकद्वयेन दशविधयमान्तर्गतं मिताहारित्वमन्वयव्यतिरेकाभ्यां प्रतिपाद्यते । 'पूरयेदशनेनार्धं तृतीयमुदकेन तु । वायोः संचरणार्थं तु चतुर्थमवशेषयेत्' इत्यादियोगशास्त्रोक्तपरिमाणादधिकं न्यूनं वा भुञ्जानस्य योगो न संपद्यते । तत्र हेतुमुत्तरार्धेनाह—न चेति । अत्याशिनो ह्यतिनिद्रा स्यात् अत्यन्तमनश्नतश्चातिजागरः । तदुभयमपि योगप्रतिबन्धकम् । अतः हे अर्जुन सावधानो भवेति संबोधनाभिप्रायः । एवं व्यतिरेकमुखेणाहारनियमस्य योगाङ्गत्वमुक्त्वा अन्वयमुखेनापि तदाह—युक्तेति । युक्ताहारविहारस्य, आहारोऽभ्यवहारः विहारः पादक्रमः, युक्तौ नियतपरिमाणावाहारविहारौ यस्य तथोक्तस्य, अत एव युक्तस्वप्नावबोधस्य नियतनिद्राजागरस्य, तथा अन्येष्वपि विहितेषु तपःस्वाध्यायव्रतजपादिषु कर्मसु युक्तचेष्टस्य युक्ता नियतकाला चेष्टा व्यापारो यस्य तथोक्तस्यैव ब्रह्मविद्याद्वारा सर्वदुःखनिवृत्तिहेतुर्योगो भवति । अत्राहारस्य नियतत्वम् 'पूरयेदशनेनान्नम्—' इति प्रागुक्तम् । निद्राजागरयोस्तु 'रात्रेर्भागत्रयं कृत्वा प्रबुद्धः प्रथमान्तयोः । प्रस्वपन्मध्यमे भागे योगयोग्यः प्रजायते' इत्यादिस्मृतिप्रसिद्धम् । विहारस्य तु 'योजनान्न परं गच्छेत्' इत्यादि । तपःस्वाध्यायादीनां तु 'शनैर्विद्या शनैस्तपः' इत्यादि द्रष्टव्यम् । एवं ब्रह्मचारिव्रते स्थित इत्यनेन ब्रह्मचर्यम्, प्रशान्तात्मेत्यनेन अहिंसासत्यास्तेयक्षमार्जवानि, यत-

चित्तात्मेत्यनेन बहिरङ्गतः शौचम्, अपरिग्रह इत्यपरिग्रहः, स्थित इति धृतिः, विगतभीरित्यनेन शास्त्रीयनिश्चयदार्ढ्याद्विगता भीः सर्वसङ्गत्यागपूर्वकयोगप्रवृत्तिविषयकयुक्तत्वायुक्तत्वाशङ्का यस्येत्यर्थकेन आस्तिक्यम्, युक्तचेष्टस्य कर्मस्वित्यनेन तपःस्वाध्यायव्रतजपाः, निराशीरिति संतोषः तदाक्षिप्ततया तदुपलक्षिताश्चान्ये यमनियमाः प्रदर्शिताः । अथ क्रमप्राप्तमासनमाह— शुचौ देश इति । शुचौ देशे स्वभावतः संस्कारतो वा परिशुद्धे स्थाने नात्युच्छ्रितं नातीवोन्नतं नाप्यतिनीचं चैलाजिनकुशोत्तरम्, चैलं वस्त्रम् अजिनं व्याघ्रचर्म, चैलाजिने कुशेभ्य उत्तरे यस्मिंस्तत्तथोक्तम् । कुशानामुपरि चर्म, तदुपरि चैलमास्तीर्येत्यर्थः । एवंभूतं स्थिरमचलम् आत्मनः स्वस्यासनं प्रतिष्ठाप्य स्थापयित्वा । आत्मन इति परासनव्यावृत्तिः; 'आसनं शयनं वस्त्रं जायापत्यं कमण्डलुः । आत्मनः शुचिरेतानि परेषां न कदाचन' इति स्मरणात् । एवमासनमुपदिश्य तदनन्तरानुष्ठेयाः प्राणायामप्रत्याहारधारणाः प्रदर्शयति— तत्रैकाग्रमिति । तत्र तस्मिन्नासने उपविश्य । अत्र पद्मस्वस्तिकादिविशेषानादरेण केवलमुपविश्येति सामान्योक्त्या 'येन केन प्रकारेण सुखं धैर्यं च जायते । तत्सुखासनमित्युक्तम्' इति शास्त्रोक्तं सुखासनमेव विवक्षितमुपगम्यते । श्रूयते हि— 'विविक्तदेशे च सुखासनस्थः' इति । सूत्रितं च पतञ्जलिना— 'स्थिरसुखमासनम्' इति । यतचित्तेन्द्रियक्रियः, चित्तं मनः इन्द्रियाणि चक्षुरादीनि क्रिया चेष्टात्मकः प्राणः, यता नियमिताश्चित्तेन्द्रियक्रिया येन स तथोक्तः । अत्र यतक्रिय इति प्राणसंयमनोक्त्या 'अपाने जुह्वति

पतिर्गुणेशः' 'प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् । क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंवृतम्' 'क्षेत्रज्ञ आत्मा पुरुषः' इत्यादिश्रुतिस्मृतिप्रयोगदर्शनेन जीवे रूढत्वाच्च । तस्मान्न माध्वव्याख्यानं युक्तम् । नापि रामनुजव्याख्यानम्, शरीरशरीरिभावनिबन्धनसामानाधिकरण्यस्य प्रागेव निरस्तत्वात् । अतो भगवत्पादीय एव श्लोकार्थः । जीवब्रह्मैक्यसाधकबाधकविचारस्तु भाष्ये प्रपञ्चितोऽस्माभिर्विस्तरभयान्न लिख्यते ॥ २ ॥

एवं श्लोकद्वयेन संक्षेपेणोपदिष्टमर्थं विवरीतुमारभ्यते—

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥**

'इदं शरीरम्' इति यत्पूर्वोक्तं तत्क्षेत्रं यत् यत्स्वरूपं यादृक् यद्धर्मकं यद्विकारि यैर्विकारि, यद्विकारयुक्तमित्यर्थः । यतश्च कारणात् यत्, उत्पद्यत इति शेषः । चकारः सर्वत्र समुच्चयार्थः । तथा स च क्षेत्रज्ञो यः यत्स्वरूपः यत्प्रभावः यः प्रभावो महिमा 'सर्वतःपाणिपादम्' इत्यादिना वक्ष्यमाणसार्वात्म्यरूपो यस्य स यत्प्रभावः । तत्सर्वं समासेन संक्षेपेण मत्तः शृणु ॥ ३ ॥

मत्तः शृण्वित्युक्त्या मया नूतनं किंचित्प्रकल्प्योच्यत इति न मन्तव्यम्, किं तु श्रुतिस्मृतिब्रह्मसूत्रसिद्धान्तितोऽयमर्थ इत्याह—

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

ऋषिभिस्तत्त्वार्थदर्शिभिः बहुधा विस्तरेण गीतमिदं क्षेत्रक्षेत्रज्ञयाथात्म्यम् । तत्र तावत्तत्त्वविन्मूर्धन्यतया जनकगुरुत्वेन च बृहदारण्यकादिप्रसिद्धो भगवान्याज्ञवल्क्यः स्वकीये धर्मशास्त्रे वर्णयामास । तत्र ह्यात्मस्वरूपनिरूपणं प्रस्तुत्य 'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथा ह्येकोऽप्यनेकश्च जलाधारेष्विवांशुमान्' इत्यात्मैक्यप्रतिपादनपूर्वकम् 'तस्मादस्ति परो देहादात्मा सर्वग ईश्वरः' इति जीवेश्वरैक्यं प्रतिज्ञाय 'बुद्धीन्द्रियाणि सार्थानि मनः कर्मेन्द्रियाणि च । अहंकारश्च बुद्धिश्च पृथिव्यादीनि चैव हि । अव्यक्तमात्मा क्षेत्रज्ञः क्षेत्रस्यास्य निगद्यते । ईश्वरः सर्वभूतस्थः सदसत्सदसच्च यः' इत्युपपादितम् । विज्ञानेश्वरेण च— 'बुद्ध्यादीन्यव्यक्तान्तानि क्षेत्रम्; अस्य क्षेत्रस्य योऽसावीश्वरः सर्वगतः, स एवात्मा क्षेत्रज्ञः' इति स्पष्टमेव व्याख्यातम् । मनुनापि स्वकीये धर्मशास्त्रे 'सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् । तत्राद्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः' इति मुक्तिहेतुमात्मज्ञानं प्रस्तुत्य 'आत्मैव देवताः सर्वाः सर्वमात्मन्युपस्थितम्' इत्यात्मनः सार्वात्म्यप्रतिज्ञापूर्वकम् 'प्रशासितारं सर्वेषामणीयांसमणोरपि । रुक्माभं शुद्धधीगम्यं विद्यात्तु पुरुषं परम्' इति महावाक्यार्थमुपदिश्य 'एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम् । इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥ एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना । स सर्वसमतामेत्य प्राप्नोति ब्रह्म शाश्वतम्' इत्यद्वितीयात्मतत्त्वं प्रतिपादितम् । वसिष्ठेनापि स्वकीये योगशास्त्रे— 'देहस्तावज्जडो मूढो नाहमित्येव निश्चयः' इति प्रस्तुत्य 'एते हि तद्विलासान्ता मनोबुद्धीन्द्रियादयः । असन्तः सर्व एवाहो अवधानं

विनोदिताः ॥ महाचिदेव सैवास्ति महासत्येति योच्यते । निष्कलङ्का समा शुद्धा निरहंकाररूपिणी ॥ शुद्धसंवेदनाकारं शिवं चिन्मात्रमक्षयम् । सद्ब्रह्म परमात्मादिनामभिर्याभिधीयते' इति जीवब्रह्माद्वैतमसकृदुद्घोषितम्। एवं छन्दोभिर्विविधैः पृथग्गीतम् ऋग्यजुःसामाथर्वरूपैर्वेदैर्विवेकेन वर्णितम । यजुषि तावत् 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्युपक्रम्य 'स वा एष पुरुषोऽन्नरसमयः' इत्यादिनान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्यशरीरप्राणमनोबुद्ध्यहंकाररूपकोशात्मकक्षेत्रविवेचनपूर्वकम् 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यनेन ब्रह्मैव तदात्मरूपमुपदिष्टम् । एतच्चानन्दवल्लीभाष्येऽस्माभिर्विस्तरेणोपपादितं तत एवानुसंधेयम् । एवम् 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' 'स आत्मा तत्त्वमसि श्वेतकेतो' 'स एष प्रविष्ट आ नखाग्रेभ्यः' 'अनेन जीवेनात्मनानुप्रविश्य' इत्यादिकमृक्सामाथर्ववाक्यजातमप्युदाहर्तव्यम् । ब्रह्मसूत्रपदैश्चैव, ब्रह्मसूत्राणि 'अथातो ब्रह्मजिज्ञासा' इत्यादीनि 'अनावृत्तिः शब्दात्' इत्यन्तानि, तान्येव पद्यते गम्यते ब्रह्मैभिरिति पदानि, तैश्च गीतं क्षेत्रक्षेत्रज्ञयाथात्म्यम् । तत्र हि 'न वियदश्रुतेः' इत्यादिना क्षेत्रस्वरूपम् 'नात्मश्रुतेः—' 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इत्यादिना च नित्याद्वितीयब्रह्मलक्षणं क्षेत्रज्ञस्वरूपं च वर्णितम् । हेतुमद्भिर्विनिश्चितैः, युक्तिमद्भिरसंदिग्धार्थकैश्चेत्यर्थः । एतच्च च्छन्दोभिर्ब्रह्मसूत्रपदैश्चेत्युभयोरपि विशेषणम् । तदेवमेतैर्निश्चितमेवार्थमहं तुभ्यं कथयिष्यामि, सावधानः शृण्वित्यर्थः ॥ ४ ॥

तत्र क्षेत्रस्वरूपमाह द्वाभ्याम्—

**महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥**

**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥**

पृथिव्यादीनि पञ्च महाभूतानि, तत्कारणमहंकारः, तस्यापि कारणं ज्ञानात्मकं महत्तत्त्वं बुद्धिः, तत्कारणीभूता मूलप्रकृतिरव्यक्तम्, बाह्यानि ज्ञानकर्मेन्द्रियाणि दश, एकं चान्तरिन्द्रियं मनः, इन्द्रियगोचराः पञ्च शब्दस्पर्शरूपरसगन्धाः । तदेतानि सांख्याश्चतुर्विंशतितत्त्वान्याचक्षते । सिद्धान्ते सांख्याभिमतप्रकृतिमहदहंकाराणामनङ्गीकारेऽपि भगवन्मायाशक्तिरूपायाः प्रकृतेस्तदीक्षणरूपबुद्ध्यात्मकस्य महत्तत्त्वस्य 'बहु स्यामहम्' इति संकल्परूपस्याहंकारस्य च सत्त्वान्न विरोधः । अनेन पाञ्चभौतिको देह इन्द्रियाण्यहंकारो वात्मेति मतानि निरस्तानि, तेषां क्षेत्रान्तर्भूतत्वेन क्षेत्रज्ञत्वासंभावादिति दर्शितम् । नन्विच्छाद्वेषादीनामात्मधर्माणामहंकारे दृश्यमानत्वात्स एवात्मेत्याशङ्क्य तेषामपि क्षेत्रधर्मत्वमेवेत्याह— इच्छेति । इच्छादयः प्रसिद्धाः । चेतना ज्ञानात्मिका मनोवृत्तिः । धृतिर्धैर्यम् । एतच्च 'कामः संकल्पः' इत्यादिश्रुतिसिद्धसंकल्पादिधर्मान्तराणामप्युपलक्षणम् । अनेन 'यादृक्' इति प्रतिज्ञाताः क्षेत्रधर्माश्चोक्ताः । संघात इत्यनेन देहेन्द्रियमनोहंकाराणाम-

संहतानां क्षेत्ररूपत्वेऽपि तत्संघातस्य क्षेत्रज्ञात्मरूपत्वमस्त्विति शङ्का-निरासाय तस्यापि क्षेत्ररूपतैवेति दर्शितम् । एतन्महाभूतादिधृत्यन्तं क्षेत्रमिति संक्षेपेण तुभ्यं मयोक्तम् । कथमेतस्य क्षेत्रत्वमित्याशङ्कायां सविकारमिति हेतुगर्भं विशेषणम्; विकारवत एव लोके क्षेत्रत्वद-र्शनादिति भावः ॥ ५ ॥ ६ ॥

एवं क्षेत्रस्वरूपमुक्त्वा तद्विलक्षणक्षेत्रज्ञस्वरूपं निरूपयिष्यंस्तज्ज्ञा-नसाधनान्याह पञ्चभिः—

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥**

विद्यमानैरविद्यमानैर्वा गुणैरात्मनः श्लाघारूपं संमानं मानित्वम्, तद्राहित्यममानित्वम्, न त्वनहंकारित्वम् 'अनहंकार एव च' इति वक्ष्यमाणत्वेन पौनरुक्त्यात् । ख्यातिलाभपूजार्थं स्वधर्मप्रकटनं दम्भः, तद्राहित्यमदम्भित्वम् । त्रिकरण्या परपीडावर्जनमहिंसा । परैरभिभूयमानस्यापि तान्प्रत्यविकृतचित्तत्वं क्षान्तिः । मनोवाक्का-यानामैकरूप्यमार्जवम् । प्रणिपातपरिप्रश्नसेवाभिराचार्यानुवर्तनमा-चार्योपासनम् । शौचं बाह्यमलानां मृज्जलाभ्यामन्तर्मलानां रागा-दीनां विषयदोषदर्शनाभ्यासेन प्रक्षालनया बहिरन्तःशुचित्वम् । स्थैर्यं मुक्तिसाधनप्रवृत्तस्य विघ्नसंभवेऽपि तदपरित्यागेन पुनः पुनर्य-त्नाधिक्यम् । आत्मविनिग्रहः आत्मनो देहेन्द्रियादेर्मोक्षसाधनप्राति-कूल्यस्वभावनिरोधनेन तदनुकूलतया व्यवस्थापनम् । एतज्ज्ञान-मिति प्रोक्तमिति पञ्चमेनान्वयः ॥ ७ ॥

किं च,

**इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥**

इन्द्रियार्थेषु शब्दस्पर्शरूपादिषु दृष्टानुश्रविकेषु वैराग्यम् । अनहंकारः अहमेव सर्वोत्कृष्ट इति गर्वराहित्यम् । जन्ममृत्युजरेति । गर्भवासयोनिद्वारनिःसरणं जन्म, मृत्युः सर्वमर्मच्छेदनरूपः, जरा तु बुद्धिबलतेजोनाशसर्वपरिभवरूपा, व्याधयो ज्वरादयः, दुःखान्यनिष्टसंयोगेष्टवियोगजान्याध्यात्मिकादीनि, दोषास्तु वातपित्तश्लेष्माणो मलमूत्रदुर्गन्धरूपाश्च । तेषामनुदर्शनं पुनः पुनरालोचनम् ॥ ८ ॥

किं च,

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥**

पुत्रादिष्वसक्तिः प्रीतित्यागः । तेष्वनभिष्वङ्गः पुत्रादीनां सुखे दुःखे चाहमेव सुखी दुःखीत्यध्यासाभावः । इष्टानिष्टयोरुपपत्तिषु प्राप्तिषु नित्यं सर्वदा समचित्तत्वं हर्षविषादशून्यत्वम् ॥ ९ ॥

किं च,

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥**

अनन्ययोगेन अपृथक्समाधिना अहमेव भगवान्वासुदेव इति

निश्चयेन, अत एव स्वात्मभूते मय्यव्यभिचारिण्यैकान्तिकी भक्तिः । विविक्तः शुद्धश्चित्तप्रसादजनको यो देशस्तत्सेवित्वम् । जनानां वैषयिकाणां संसदि रत्यभावः ॥ १० ॥

किं च,

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥**

आत्मानमधिकृत्य प्रवृत्तमात्मानात्मविवेकज्ञानमध्यात्मज्ञानम्, तस्मिन्नित्यत्वं तत्रैव निष्ठा, त्वंपदार्थशोधनैकपरत्वमिति यावत् । पदार्थविवेकपरो हि वाक्यार्थज्ञानमधिगच्छति । तथा तत्त्वज्ञानस्य वाक्यार्थरूपज्ञानस्य योऽर्थः फलं मोक्षस्तस्य दर्शनमालोचनम् । तत्त्वज्ञानफलालोचने हि तत्साधने प्रवृत्तिः स्यादिति भावः । तदेतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तं विंशतिसंख्याकं ज्ञायतेऽनेनेति ज्ञानसाधनत्वाज्ज्ञानमिति प्रोक्तम् । अतोऽन्यथा अस्माद्विपरीतं यन्मानित्वादिकं तदज्ञानं ज्ञानविरोधित्वात् । तस्मादज्ञानपरित्यागेन ज्ञानमेवोपादेयमित्यर्थः ॥ ११ ॥

एवं क्षेत्रं क्षेत्रज्ञतत्त्वज्ञानसाधनं चोक्त्वा संप्रति क्षेत्रज्ञस्वरूपं कथयति—

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥**

यज्ज्ञेयं क्षेत्रज्ञस्वरूपं तत्प्रवक्ष्यामीति प्रथममन्वयः । श्रोतुराद-

रसिद्धये ज्ञानफलं दर्शयति— यज्ज्ञात्वा अमृतं मोक्षं प्राप्नोति। किं तत्स्वरूपम्? परं ब्रह्मैव। कथं परब्रह्मणः क्षेत्रज्ञस्वरूपत्वमित्यतो हेतुगर्भं विशेषणम्— अनादिमदिति। आदिः कारणमस्यास्तीत्यादिमत्, तन्न भवतीत्यनादिमत् अजन्यमविकारम्। अनेन ब्रह्मातिरिक्तस्य सर्वस्यापि सविकारत्वेन क्षेत्रत्वान्निर्विकारब्रह्मण एव क्षेत्रज्ञत्वमुचितमिति दर्शितम्। यद्यप्यनादीत्येतावतैव बहुव्रीहिणा मतुबर्थे सिद्धे व्यर्थं मतुबन्तम्, तथापि यथोक्तविशेषणविशेष्यभावे न वैयर्थ्यमिति ज्ञेयम्। यद्वा अनादीति च मत्परमिति च पदद्वयम्। मत्तः सगुणरूपात्परं निर्विशेषमित्यर्थः। तदेवाह— न सत्तन्नासदुच्यते। विधिमुखेन प्रमाणविषयः सत्। निषेधमुखेन प्रमाणविषयस्त्वसत्। इदं तु तदुभयविलक्षणम्, निर्विशेषत्वात्स्वप्रकाशत्वाच्चैतन्यरूपत्वाच्च 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिश्रुतेरिति भावः॥ १२॥

यदि वाङ्मनसयोरविषयः, कथं तर्हि ज्ञेयत्वमित्याशङ्क्य 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायेन तज्ज्ञानमुपपादयति—

**सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम्।**
**सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥ १३॥**

सर्वतः सर्वदेहेषु पाणयः पादाश्च सर्वव्यापारेषु प्रवर्तनीया यस्य क्षेत्रज्ञस्वरूपत्वेनाभिमतस्य परब्रह्मणः तत्सर्वतःपाणिपादम्, अक्षि-

तनप्रवृत्तेश्चेतनाधिष्ठानपूर्वकत्वात् । तथा सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य प्रवर्तनीयानि तत्तथोक्तम् । सर्वतः श्रुतयः श्रोत्राणि च यस्य तत्तथोक्तम् । लोके सर्वप्राणिनिकायेषु सर्वमचेतनवर्गरूपं क्षेत्रमावृत्य सत्तास्फूर्तिप्रदतयाध्यासिकसंबन्धेन व्याप्य तत्तिष्ठति । एवं च निर्विशेषस्य स्वयमवाङ्मनसगोचरत्वेऽपि सर्वजगत्प्राणिगतपाणिपादादिसर्वव्यवहारास्पदत्वरूपेण ज्ञेयत्वमविरुद्धमिति भावः ॥ १३ ॥

ननु संव्यवहारास्पदस्य तद्धेतुपाणिपादादिमत्त्वमपि वास्तवमेवेति निर्विशेषत्वानुपपत्तिरित्याशङ्कयाह—

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥**

सर्वेषां ज्ञानकर्मेन्द्रियाणां गुणास्तद्धर्माः श्रवणवचनादिव्यापाराः तेषामाभासः प्रतिभासमात्रं यस्य तत्सर्वेन्द्रियगुणाभासम्, तद्व्यवहारास्पदत्वेन प्रतीयते परम्; वस्तुतस्तु सर्वेन्द्रियविवर्जितम् । तथा च श्रुतिः— 'ध्यायतीव लेलायतीव' 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिः । अत्र ध्यानं बुद्धीन्द्रियव्यापारोपलक्षणम्, लेलायनं तु चलनं कर्मेन्द्रियव्यापारोपलक्षणम् । सर्वेन्द्रियविवर्जितत्वे हेतुः— असक्तं परमार्थतः सर्वसंबन्धशून्यम्; तथापि सर्वभृत्सर्वाधारभूतम्, निरधिष्ठानभ्रमायोगात् । तथा परमार्थतो निर्गुणमपि गुणभोक्तृ सत्त्वादिगुणपालकम् ॥ १४ ॥

किं च,

**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥**

चराचराणां भूतानां बहिरन्तश्च तदेव सुवर्णमिव कटकमुकुटादीनाम् । तथा चरमचरं च सर्वं जगत्तदेव नान्यत्, कारणातिरेकेण कार्यस्यासत्त्वात् । एवमपि सूक्ष्मत्वाद्रूपादिहीनत्वात्तदविज्ञेयम् इदं तदिति विस्पष्टज्ञानार्हं न भवति । अत एव अविदुषां योजनलक्षकोट्यन्तरितमिव दूरस्थं च, विदुषां पुनः स्वात्मत्वादन्तिके च तत् नित्यसंनिहितम् । तथा च मन्त्रः— 'तदेजति तन्नैजति तद्दूरे तदु अन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः' इति ॥ १५ ॥

ननु प्रतिदेहं भिन्नत्वेनोपलभ्यमानस्य क्षेत्रज्ञस्य कथं सर्वात्मकत्वमित्याशङ्कयाह—

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥**

भूतेषु सर्वप्राणिषु अविभक्तमभिन्नं न तु प्रतिदेहं भिन्नम्, तथापि देहतादात्म्येन प्रतीयमानत्वात्प्रतिदेहं विभक्तमिव च स्थितम् । तथा च श्रुतिः— 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भिन्नरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति । नन्वस्तु सर्वदेहेष्वेक एवात्मा, तथापि तस्य

ब्रह्मत्वं न युज्यते, 'यतो वा इमानि भूतानि' इत्यादिश्रुत्या जन्मादिसूत्रेण च ब्रह्मलक्षणत्वेनोक्तस्य जगज्जन्मस्थितिलयकारणत्वस्य जीवात्मन्यसंभवादित्याशङ्क्याह— भूतभर्त्रिति । भूतानि सर्वाणि स्थितिकाले बिभर्ति, तथा भूतानां प्रलयकाले ग्रसिष्णु ग्रसनशीलम्, उत्पत्तिकाले प्रभविष्णु उत्पादनशीलं च । तथा च जीवेश्वरानुगतशुद्धचिन्मात्ररूपनिर्विशेषब्रह्मण एव श्रुतिसूत्रोक्तं तल्लक्षणमिति नोक्तदोष इति भाव: ॥ १६ ॥

एवं च ब्रह्मण एव क्षेत्रज्ञरूपत्वाद्ब्रह्मधर्म: स्वप्रकाशत्वादिरपि क्षेत्रज्ञस्यैव स्वरूपमित्याह—

**ज्योतिषामपि तज्ज्योतिस्तमस: परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं सर्वस्य हृदि धिष्ठितम् ॥ १७ ॥**

तत्क्षेत्रज्ञाख्यं ज्ञेयवस्तु ज्योतिषामादित्यादीनामपि ज्योतिरवभासकमित्युच्यते 'येन सूर्यस्तपति तेजसेद्ध:' 'तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतिभि: । तथा तमस: अज्ञानात्परं तेनास्पृष्टमित्युच्यते 'आदित्यवर्णं तमस: परस्तात्' इत्यादिभि: । तथा 'प्रज्ञानं ब्रह्म' 'तद्विजिज्ञासस्व' इत्यादिभिर्ज्ञानं ज्ञेयं च तदेवोच्यते । तथा 'यो वेद निहितं गुहायाम्' 'आत्मा गुहायां निहितोऽस्य जन्तो:' 'सर्वस्य चाहं हृदि संनिविष्ट:' 'अहमात्मा गुडाकेश सर्वभूताशयस्थित:' इत्यादिभिस्तदेव सर्वस्य प्राणिजातस्य हृदि स्थितमित्युच्यते । यद्येवं किमिति न सर्वैर्ज्ञायते? तत्राह—

ज्ञानगम्यमिति । 'अमानित्वमदम्भित्वम्' इत्यादिलक्षणेन पूर्वोक्त-ज्ञानसाधनेन ग्राह्यमित्यर्थः ॥ १७ ॥

उपदिष्टमर्थमुपसंहरति—

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥**

इत्येवं क्षेत्रम् 'महाभूतानि' इत्यादि 'चेतना धृतिः' इत्यन्तम्, तथा ज्ञानम् 'अमानित्वम्' इत्यादि 'तत्त्वज्ञानार्थदर्शनम्' इत्यन्तम्, ज्ञेयं च 'अनादिमत्परम्' इत्यादि 'सर्वस्य हृदि धिष्ठितम्' इत्यन्तं समासतः संक्षेपेण मया तुभ्यमुक्तम् । एतावानेव हि सर्ववेदार्थो गीताशास्त्रार्थश्च; अत्र च मद्भक्त एवाधिकारीत्याह—मद्भक्त इति । एतच्च मद्भक्तो विज्ञाय मद्भावाय ब्रह्मत्वायोपपद्यते योग्यो भवति; 'ब्रह्म वेद ब्रह्मैव भवति' 'स एव तदभवत्' इत्यादिश्रुतेरिति भावः ॥ १८ ॥

तदनेन ग्रन्थेन 'तत्क्षेत्रं यच्च यादृक्च' इत्येतद्व्याख्यातम् । इदानीम् 'यद्विकारि यतश्च यत्' इत्येतत्सार्धेन व्याचष्टे—

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥१९॥**
**कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**

प्रकृतिस्त्रिगुणात्मिका पारमेश्वरी मायाशक्तिः क्षेत्ररूपा या सप्तमे पूर्वमपरा प्रकृतिरित्युक्ता । पुरुषस्तु क्षेत्रज्ञो यः पूर्वं परा प्रकृतिरित्युक्तः । तावुभावपि अनादी एव विद्धि, न विद्यते आदिः कारणं ययोस्तावनादी । यस्मात्प्रकृतिरनादिस्तस्मात्तस्याः सकलजगत्कारणत्वं युक्तमित्याह— विकारानिति । पञ्चमहाभूतैकादशेन्द्रियरूपान्षोडश विकारान् गुणांश्च सत्त्वरजस्तमोरूपान्सुखदुःखमोहान् प्रकृतिकारणकान्विद्धि । एतदेवोपपादयति— कार्येति । कार्यं शरीरं करणानीन्द्रियाणि । तेषां कर्तृत्वं नाम तदुत्पादकत्वम्, शरीरेन्द्रियाद्याकारपरिणाम इति यावत् । तत्र प्रकृतिर्हेतुरुच्यते । प्रकृतिपरिणामाः शरीरेन्द्रियाणीत्यर्थः ॥ १९ ॥

एवम् 'यद्विकारि यतश्च यत्' इत्येतद्व्याख्याय 'स च यो यत्प्रभावश्च' इत्येतत्प्राग्व्याख्यातमेव पुनः प्रपञ्चयति सार्धद्वयेन—

**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥**

पुरुषः क्षेत्रज्ञः परा प्रकृतिरिति प्रागुक्तः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते, भोक्ता भवतीत्यर्थः ॥ २० ॥

ननु निर्विशेषपरब्रह्मात्मकत्वेनोक्तस्य पुरुषस्य कथं सुखदुःखभोक्तृत्वरूपः संसार इत्याशङ्क्य, आध्यासिक एवायं न स्वत इत्याह—

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥**

हि यस्मात्कारणात्पुरुषः प्रकृतिस्थः प्रकृतिपरिणामभूतदेहतादा-त्म्याध्यासेन स्थितः सन् प्रकृतिजान्गुणान्सुखदुःखमोहान्भुङ्क्ते । अतोऽस्य पुरुषस्य सुखदुःखमोहहेतुषु सदसद्योनिजन्मसु, सतीषु देवयोनिषु असतीषु पश्वादियोनिषु सदसतीषु धर्माधर्ममिश्रासु मनुष्ययोनिषु च यानि जन्मानि तेषु गुणसङ्गः सत्त्वरजस्तमोगुणात्मकप्रकृतिमयदेहतादात्म्याध्यासरूपः संबन्धः, स एव कारणम् । न त्वसङ्गस्यास्य स्वरूपेण संसारोऽस्ति, 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इत्यादिश्रुतेरिति भावः ॥ २१ ॥

एतदेवोपपादयन्पुरुषस्य स्वरूपमाह—

**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥२२॥**

अस्मिन्प्रकृतिपरिणामे देहे स्थितोऽपि पुरुषः परो भिन्न एव तद्गुणैर्न लिप्यते; वस्तुतः स्वरूपेणासंसारीत्यर्थः । अत्र हेतवः—उपद्रष्टा, यथा हि ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तत्समीपस्थोऽन्यः स्वयमव्यापृत एव यज्ञविद्याकुशलत्वादृत्विग्यजमानव्यापारगुणदोषाणामीक्षिता, तथा कार्यकरणव्यापारेषु स्वयमव्यापृतो विलक्षणस्तेषां कार्यकरणानां सव्यापाराणां समीपस्थो द्रष्टा । अनुमन्ता, कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव संनिधिमात्रेण तदनुकूलत्वादनुमन्ता । भर्ता, देहेन्द्रियादीनां सत्तास्फुरणदानेन धारयिता पोषयिता च । भोक्ता, सुखदुःखादिरूपाणां बुद्धिवृत्तीनामुपलब्धा ।

महेश्वरः, महांश्चासावीश्वरश्च महेश्वरः, 'एष सर्वेश्वर एष भूताधिपतिः' इति श्रुतेः । परमात्मेति चाप्युक्तः 'स वा एष महानज आत्मा' इत्यादिश्रुतिभिः । अत्रापि 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्यग्रे वक्ष्यते ॥ २२ ॥

तदेवम् 'स च यो यत्प्रभावश्च' इत्येतत्प्रपञ्चितम् । इदानीम् 'यज्ज्ञात्वामृतमश्नुते' इत्येतद्व्याचष्टे—

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥**

यः एवमुक्तप्रकारेण पुरुषं वेत्ति साक्षात्करोति, प्रकृतिं चाविद्यां गुणैः स्वविकारैः सह मिथ्याभूतां वेत्ति, स ज्ञानी सर्वथा प्रारब्धकर्मवशाद्विधिमतिक्रम्य वर्तमानोऽपि सन् भूयो न जायते तत्कारणाविद्यानाशात् 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति न्यायात् । अपिशब्देन विधिमनतिक्रम्य वर्तमानः पुनर्न जायत इति किमु वक्तव्यमिति दर्शितम् ॥ २३ ॥

एवंविधात्मज्ञानेऽधिकारितारतम्येन साधनभेदान्दर्शयति द्वाभ्याम्—

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये सांख्येन योगेन कर्मयोगेण चापरे ॥ २४ ॥**

**अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥**

केचिदुत्तमाधिकारिणः ध्यानेन विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहेण श्रवणमननफलभूतेन निदिध्यासनाख्येन आत्मनि हृदये आत्मानम् आत्मना मनसा पश्यन्ति साक्षात्कुर्वन्ति । अन्ये तु मध्यमाधिकारिणः सांख्येन योगेन श्रवणमननरूपेणात्मचिन्तनेन पश्यन्ति, निदिध्यासनाशक्ताः श्रवणमनने एव कुर्वन्ति; तेऽपि क्रमान्निदिध्यासनं प्राप्य साक्षात्कुर्वन्तीत्यर्थः । अपरे मन्दाः कर्मयोगेण परमेश्वरार्पणनिष्कामकर्मानुष्ठानरूपेणात्मानं पश्यन्ति ; श्रवणाद्यशक्ताः कर्मयोग एव निष्ठिताः सन्तः क्रमेण चित्तशुद्धिश्रवणमनननिदिध्यासनद्वारा पश्यन्तीत्यर्थः । अन्ये त्वतिमन्दाः यथोक्तोपायेषु केनाप्युक्तरूपमात्मानं द्रष्टुमजानन्तः अन्येभ्यः परमकारुणिकेभ्य आचार्येभ्यः श्रुत्वा 'ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् । अशक्नुवन्भावयितुं वाक्यमेतदुदीरयेत्' इत्यादिशास्त्रप्रसिद्धम् 'ब्रह्मैवाहम्' इति वाक्यं नित्यमावर्तयेत्युपदेशं लब्ध्वा तथैवोपासते श्रद्धयानुतिष्ठन्ति । तेऽपि मृत्युं संसारं क्रमेणातितरन्त्येव ; यतः श्रुतिपरायणाः, श्रूयत इति श्रुतिराचार्योपदेशः, स एव परमयनं मोक्षमार्गः येषां ते तथोक्ताः । तेऽपीत्यपिशब्दात्कर्मयोगादिसाधननिष्ठा मृत्युमतितरन्तीति किमु वक्तव्यमित्यभिप्रायः ॥ २४—२५ ॥

'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' इति प्रागुक्तयोः

संसारतत्त्वज्ञानयोः प्रपञ्चनार्थमतः परमध्यायशेषः । तत्र संसारस्याविद्यिकत्वं दर्शयति—

**यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥**

यावत्किंचित्सत्त्वं वस्तु स्थावरजङ्गमात्मकमुत्पद्यते, तत्सर्वं क्षेत्रक्षेत्रज्ञसंयोगात् क्षेत्रक्षेत्रज्ञयोः प्रागुक्तयोः संयोगः परस्पराविवेककृतः सत्यानृतमिथुनीकरणात्मकस्तादात्म्याध्यासः, अतिरिक्तसंबन्धासंभवस्य वज्रपञ्जरे प्रपञ्चितत्वात् । तस्मादध्यासादेव सर्वं कार्यजातमिति विद्धि । अतः स्वरूपाज्ञाननिबन्धन एव संसार इत्यर्थः ॥ २६ ॥

एवमाविद्यिकं संसारमुक्त्वा तन्निवर्तकं तत्त्वज्ञानमाह—

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥**

सर्वेषु भूतेषु देवतिर्यङ्नरादिविचित्रभेदभिन्नेषु प्राणिषु सुरामूत्रगङ्गाजलेषु सूर्यबिम्बमिव सममेकरूपं यथा भवति तथा तिष्ठन्तम्, अत एव तेषु विनश्यत्स्वपि अविनश्यन्तम् । विकारमात्रोपलक्षणमेतत् । भूतविकारे स्वयमविक्रियमित्यर्थः । एवंविधं परमेश्वरम् ‘ ईश्वरो जीवकलया प्रविष्टो मानुषीं तनुम् ’ ‘ स एष इह प्रविष्ट आ नखाग्रेभ्यः ’ ‘ तत्सृष्ट्वा तदेवानुप्राविशत् ’ ‘ अनेन जीवेनात्मनानुप्रविश्य ’ इत्यादिप्रमाणसहस्रसंप्रतिपन्नपरब्रह्मभावं क्षेत्रज्ञं यः पश्यति, स एव सम्यक्पश्यति नान्यः ॥ २७ ॥

तदेतदात्मदर्शनमिष्टानिष्टप्राप्तिपरिहारफलेन स्तौति—

**समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥**

सर्वभूतेषु समं यथा तथा समवस्थितं सम्यग्जन्मादिनाशान्तषड्भावविकारशून्यतयावस्थितम् ईश्वरमात्मानं पश्यन् हि यस्मादात्मानं न हिनस्ति, संरक्षति, संसारान्मोचयतीति यावत्; तस्मात् परां गतिं मुक्तिमाप्नोति । अनेन— य एवमात्मानं न पश्यति स पापीयानात्महा स्वस्वरूपज्ञानिनं प्रति, वस्तुगत्यात्मनो विद्यमानस्याप्यविद्यमानफलतया तेन तस्य हतप्रायत्वात्; अतस्तस्यात्महत्यापापिष्ठस्यानिष्टमेव फलं भवतीति दर्शितम्; यदाहुः—'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा' इति; श्रुतिरपि 'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति । असुर्या असुरैरुपभोग्याः ॥ २८ ॥

ननु 'समं पश्यन्हि सर्वत्र' इत्युक्तम्, शुभाशुभकर्तॄणामात्मनां साम्यायोगादित्याशङ्क्य तत्कर्तृत्वमेवासिद्धमित्याह—

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥**

मनोवाक्कायारम्याणि कर्माणि सर्वशः सर्वप्रकारैः प्रकृत्यैव माया-

विद्याख्यया देहेन्द्रियादिरूपेण परिणतया क्रियमाणानि यः पश्यति । प्रकृत्यैवेत्येवकारव्यावर्त्यमाह— तथात्मानमकर्तारमिति । तथाशब्दः पश्यतेराकर्षणार्थः । 'प्रकृतिपरिणामभूतान्तःकरणतादात्म्याध्यासेनैवात्मनः कर्तृत्वं न वस्तुतः' इति यः पश्यति 'विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि च' 'ध्यायतीव लेलायतीव' 'अहंकारविमूढात्मा कर्ताहमिति मन्यते । चित्ते कर्तरि तत्रात्मा कर्तेवाहं धिया स्मृतः' इत्यादिप्रमाणैर्यः पश्यति स एव सम्यक्पश्यति नान्य इत्यर्थः ॥ २९ ॥

एवं भूतभेदमभ्युपेत्य कर्मवैषम्यकृतः क्षेत्रज्ञभेदो निरस्तः । इदानीं भूतभेदस्यापि कल्पितत्वात्तत्कृतोऽप्यात्मभेदो नेत्याह—

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥**

यदा भूतानां स्थावरजङ्गमात्मकानां पृथग्भावं भेदम् एकस्थम् एकस्मिन्नात्मनि सद्रूपेऽधिष्ठाने स्थितं कल्पितस्याधिष्ठानातिरेकादात्मैवेदं सर्वमित्यनुपश्यति । तत्र हेतुः— तत एव चेति । चो हेतौ । यस्मात्तत एवात्मनः सकाशादेव रज्जुतः सर्पदण्डधारादीनामिव भूतानां विस्तारं विकासमुत्पत्तिमनुपश्यति तस्मात्सर्पादीनां रज्ज्वात्मकत्ववद्भूतानामप्यात्ममात्ररूपत्वमिति तदा सर्वाद्वैतदर्शी परिपूर्णं ब्रह्म संपद्यते ब्रह्मैव भवति ॥ ३० ॥

एवं च सर्पादीनां रज्ज्वात्मकत्वेऽपि रज्ज्वाः सर्पादिविकारैरिव

सर्वभूतानामात्मरूपत्वेऽप्यात्मनो भूतविकारैर्न लिप्तत्वमित्याह—

**अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥**

अयमपरोक्षतयानुभूयमानः प्रत्यगात्मरूपः परमात्मा शरीरस्थोऽपि अव्ययः न व्येतीत्यव्ययः सर्वविकारशून्य इति प्रथममन्वयः । तत्र व्ययो द्विविधः— धर्मिस्वरूपस्योत्पत्त्या वा तदनुत्पत्तावपि धर्माणामुत्पत्त्या वा । प्रथमं निराकरोति—अनादित्वादिति । अनादेर्जन्मैव नेति जन्मोत्तरभाविनो भावविकारा न संभवन्त्येव; अतो न स्वरूपेण विकारित्वमित्यर्थः । द्वितीयं निराकरोति— निर्गुणत्वादिति । निर्धर्मकत्वाद्धर्मद्वारापि विकारो नेत्यर्थः । न चेच्छाद्वेषादीनामात्मधर्मत्वप्रसिद्धेः कथं निर्धर्मकत्वमिति वाच्यम्; 'इच्छा द्वेषः सुखं दुःखम्' इत्यादिना तेषां क्षेत्रधर्मत्वकथनादिति भावः । एवं निर्धर्मकत्वादेव शरीरस्थोऽपि न करोति; अत एव च कर्मफलैर्न लिप्यते, तदकर्तुस्तत्फललेपासंभवात् ॥ ३१ ॥

अत्र दृष्टान्तमाह—

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥**

यथा सर्वत्र पङ्कादिष्वपि स्थितमाकाशं सौक्ष्म्यादसङ्गस्वभावत्वात्पङ्कादिभिर्नोपलिप्यते तथा । स्पष्टमन्यत् ॥ ३२ ॥

न केवलमसङ्गत्वादात्मा नोपलिप्यते, किं तु प्रकाशकत्वादपि प्रकाश्यधर्मैर्न लिप्यत इति सदृष्टान्तमाह—

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥**

'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इति श्रुत्यर्थप्रतिपादकोऽयं श्लोकः ॥ ३३ ॥

अध्यायार्थं सफलमुपसंहरति—

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥**

एवमुक्तरीत्या क्षेत्रक्षेत्रज्ञयोरन्तरं भेदं जडत्वाजडत्वसविकारत्वतदभावरूपम्, तथा भूतानां प्रकृतिमोक्षं च, प्रकृतिरविद्या मोक्ष्यतेऽनेनेति प्रकृतिमोक्षः अविद्याविवेचनोपायभूतम् 'अमानित्वमदम्भित्वम्' इत्यादिकम्, तच्च ये ज्ञानलक्षणेन चक्षुषा विदुर्जानन्ति, ते परं ब्रह्म यान्ति ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकसार्वभौमश्रीमदद्वैतविद्या-
प्रतिष्ठापनाभिनवशंकराचार्यसर्वतन्त्रस्वतन्त्रश्रीम-
द्रामब्रह्मानन्दतीर्थभगवत्पूज्यपादानां शिष्येण
श्रीवेङ्कटनाथेन कृते ब्रह्मानन्दगिर्याख्याने
भगवद्गीताव्याख्याने त्रयोदशोऽध्यायः ॥

# चतुर्दशोऽध्यायः ॥

---

त्रयोदशेऽध्याये क्षेत्रक्षेत्रज्ञस्वरूपं तत्प्रसङ्गागतमन्यदपि किंचिन्निरूपितम् । तदेव चतुर्दशे विस्तरेण निरूप्यते । पूर्वत्र हि 'यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि' इत्युक्तम्; तत्र निरीश्वरसांख्यानामिव किं स्वातन्त्र्येण क्षेत्रक्षेत्रज्ञसंयोगः, किं वेश्वरेच्छयैव भवति? तथा 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्युक्तम्; तत्र कस्मिन्गुणे कथं सङ्गः, के गुणाः, कथं वा ते बध्नन्ति? तथा 'भूतप्रकृतिमोक्षं च ये विदुः' इत्युक्तम्; तत्र भूतप्रकृतिशब्दोक्तेभ्यो गुणेभ्यः कथं मोक्षणम्, मुक्तस्य च किं लक्षणम्? इति तदेतत्सर्वमत्र निरूप्यते । तत्र निरुरूपयिषितमर्थं स्तुवन्द्वाभ्याम्,

**श्रीभगवानुवाच—**

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१॥**

परं परवस्तुविषयकं ज्ञानं ज्ञायतेऽनेनेति ज्ञानं परमात्मज्ञानसाधनं भूयः पुनः पूर्वाध्यायोक्तमपि प्रकर्षेण विस्तरेण वक्ष्यामि । कथंभूतम्? ज्ञानानां ज्ञानसाधनानां यज्ञादीनां मध्ये उत्तममुत्कृष्टम्,

अन्तरङ्गत्वेन बहिरङ्गयज्ञादिभ्योऽतिशयितत्वात् । अत एवाह—यज्ज्ञात्वानुष्ठाय मुनयः सर्वे इतः संसारबन्धात्परां सिद्धिं मुक्तिं गताः ॥

एतदेव विवृणोति—

**इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

इदं वक्ष्यमाणं ज्ञानं ज्ञानसाधनमपाश्रित्यानुष्ठाय मम साधर्म्यं मद्रूपत्वमागताः प्राप्ताः सन्तः सर्गेऽपि हिरण्यगर्भादिषूत्पद्यमानेष्वपि नोपजायन्ते, तथा तेषां प्रलयेऽपि न व्यथन्ति, न प्रलीयन्त इत्यर्थः । अत्र "मम साधर्म्यम्' इत्युक्त्या मुक्तानामीश्वरसमानरूपत्वमेव, न त्वभेदः' इति रामानुजो बभ्राम । तत्तु 'परमेश्वरस्वरूपत्वमेव तत्साधर्म्यं न तत्समानधर्मत्वम्, क्षेत्रज्ञेश्वरभेदाभावात्' इति भाष्यवचनैरेव चिकित्सितम् । न हि 'क्षेत्रज्ञं चापि मां विद्धि' इत्युपक्रम्य 'मद्भावायोपपद्यते' 'नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति' इत्यादि मध्ये परामर्शपूर्वकम् 'स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते' इत्युपसंह्रियमाणेऽस्मिन्ग्रन्थसंदर्भे जीवेश्वरभेदवादः स्वारस्यमश्नुते । किं च 'निरञ्जनः परमं साम्यमुपैति' इति त्वन्मतसाधकत्वेनाभिमतश्रुतौ 'परमं साम्यम्' इत्यभेद एवोच्यते, कियत्यपि भेदे सति तद्व्याप्यधर्मप्रयुक्तवैलक्षण्यावश्यंभावेन परमसाम्यायोगात् । अतः श्रुतिरेवेयम् 'मम साधर्म्यम्' इत्यस्य मत्स्वरूपत्वमित्यर्थमानयति । अपि च प्रत्येकं मुक्तिसाधनत्वेन त्वदभिमतयो-

निरन्तरचिन्ताभरन्यासरूपयोर्भक्तिप्रपत्त्योः स्वरूपतः कर्मापेक्षानपेक्षाभ्यामावृत्त्यनावृत्तिभ्यां च विषमत्वेन तयोर्मिथस्तारतम्यात्तत्साध्यमुक्तावप्यग्निहोत्रदर्शपूर्णमासज्योतिष्टोमसाध्यस्वर्ग इव साम्यं न भवतीत्याद्यन्यत्र विस्तरः ॥ २ ॥

एवं प्रशंसया श्रोतारमभिमुखीकृत्य प्रथमं तावदीश्वराधीनयोरेव प्रकृतिपुरुषयोः सर्वभूतहेतुत्वं न तु स्वतन्त्रयोरित्यमुमर्थं दर्शयति द्वाभ्याम्—

**मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**

देशतः कालतो वानवच्छेदान्महत् । सर्वकार्यवृद्धिहेतुत्वरूपाद्बृंहणत्वाद्ब्रह्म प्रकृतिः । तन्महद्ब्रह्म ममेश्वरस्य योनिर्गर्भाधानस्थानम् । तस्मिन्नहं गर्भं सर्वभूतजन्मकारणम् 'बहु स्यां प्रजायेय' इति श्रुत्युक्तमीक्षणरूपं संकल्पं दधामि । यथा हि लोके पिता पुत्रमनुशयिनं व्रीह्याद्याहाररूपेण स्वस्मिँल्लीनं शरीरेण योजयितुं योनौ रेतःसेकपूर्वकं गर्भमाधत्ते, ततः स पुत्रः शरीरेण युज्यते, तदर्थं च मध्ये कलिलाद्यवस्था भवन्ति ; तथा प्रलये मयि लीनमविद्याकामकर्मानुशयवन्तं क्षेत्रज्ञं सृष्टिसमये क्षेत्रेण कार्यकरणसंघातरूपेण योजयितुं चिदाभासाख्यरेतःसेकपूर्वकं मायावृत्तिरूपं गर्भमादधामि, तदर्थं च मध्ये आकाशवायुतेजोजलभूम्याद्युत्पत्त्यवस्था भवन्ति । ततो गर्भाधानात्सर्वभूतानां हिरण्यगर्भादीनां संभव उत्पत्तिर्भवति, न त्वीश्वरकृतगर्भाधानं विनेत्यर्थः ॥ ३ ॥

सर्वभूतानां संभवस्ततो भवतीत्येतदेवोपपादयति—

**सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**

देवपितृमनुष्यपशुपक्षिसरीसृपादिसर्वयोनिषु यास्तत्तन्मूर्तयो जायन्ते तासां मूर्तीनां महद्ब्रह्म प्रकृतिः योनिर्मातृस्थानीया; अहमीश्वरो बीजप्रदो गर्भाधानकर्ता पिता ॥ ४ ॥

एवं क्षेत्रक्षेत्रज्ञसंयोगस्येश्वराधीनत्वमुक्तम् । इदानीं के गुणाः कथं वा बध्नन्तीत्यस्योत्तरमाह चतुर्भिः—

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

सत्त्वं रजस्तम इत्येवंनामानस्त्रयो गुणाः प्रकृतिसंभवाः, प्रकृतिरीश्वरशक्तिर्माया, सैव संभव आविर्भावस्थानं येषां ते तथोक्ताः । गुणसाम्यं प्रकृतिः, तस्याः सकाशात्परस्पराङ्गाङ्गिभावेन वैषम्येणाभिव्यक्ता इत्यर्थः । ते च देहे प्रकृतिपरिणामे तादात्म्येन स्थितं देहिनं क्षेत्रज्ञं वस्तुतः अव्ययं निर्विकारमेव सन्तं निबध्नन्ति सुखदुःखमोहादिस्वविकारवत्तयोपदर्शयन्त्याप इव निष्कम्पमादित्यमात्मकम्पेन कम्पवन्तम्; अतो मिथ्याभूत एव बन्धो न वास्तव इत्यव्ययपदेन द्योत्यते ॥ ५ ॥

तत्र सत्त्वस्य लक्षणं बन्धकत्वप्रकारं चाह—

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**

तत्र तेषां गुणानां मध्ये सत्त्वं प्रकाशकं चैतन्यस्यावरणाभिभवरूपप्रकाशजनकम् । कुतः? निर्मलत्वात्स्फटिकस्येव स्वच्छत्वात्, चिद्बिम्बग्रहणयोग्यत्वादिति यावत् । तथा अनामयम् आमयस्य दुःखस्य विरोधि, सुखाभिव्यञ्जकमित्यर्थः । एतादृशं सत्त्वं सुखसङ्गेन ज्ञानसङ्गेन च स्वकार्यभूतसुखज्ञानाभ्यां यः सङ्गस्तेन क्षेत्रज्ञं बध्नाति 'अहं सुखी ज्ञानी च' इति मनोधर्मास्तदभिमानिनि क्षेत्रज्ञे संयोजयतीत्यर्थः ॥ ६ ॥

अथ रजसो लक्षणं बन्धकत्वप्रकारं चाह—

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

रज्यते विषयेषु पुरुषोऽनेनेति रागः कामः, स एवात्मा स्वरूपं यस्य धर्मधर्मिणोस्तादात्म्यात्तद्रागात्मकं रजो विद्धि । अत एव तृष्णासङ्गसमुद्भवम्, अप्राप्ताभिलाषस्तृष्णा, प्राप्ते विशेषप्रीतिरासङ्गः, तयोस्तृष्णासङ्गयोः संभवो यस्मात्तत्तथोक्तम् । तच्च रजः कर्मसङ्गेन कर्मसु दृष्टादृष्टार्थेषु 'अहमिदं करोम्येतत्फलं भोक्ष्ये' इत्यभिनिवेशः सङ्गः, तेन देहिनं वस्तुतोऽकर्तारमेव सन्तं निबध्नाति ॥ ७ ॥

तमसो लक्षणं बन्धकत्वं चाह—

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**

तमस्तु अज्ञानजम् अज्ञानादावरणशक्तिप्रधानाज्जातं विद्धि, अत एव सर्वेषां देहिनां मोहनमविवेकजनकम् । तच्च तमः प्रमादालस्यनिद्राभिर्देहिनं निबध्नाति । तत्र प्रमादोऽनवधानम्, आलस्यमनुद्यमः स्तब्धतापरपर्यायः, निद्रा सर्वेन्द्रियप्रवृत्त्युपरतिस्तमसोऽवस्थाविशेषः ॥ ८ ॥

एतेषां मध्ये कस्मिन्कार्ये कस्य गुणस्योत्कर्ष इत्यत आह—

**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥**

सत्त्वमुत्कृष्टं सत्सुखे सञ्जयति देहिनं संश्लेषयति 'षञ्ज सङ्गे' इति धातुः । दुःखकारणे सत्यपि सुखाभिमुखमेव देहिनं करोतीत्यर्थः । एवं रज उत्कृष्टं सत्सुखादिकारणे सत्यपि कर्मणि सञ्जयतीत्यनुषङ्गः । तमस्तूत्कृष्टं प्रमाणबलेनोत्पद्यमानमपि सत्त्वकार्यं ज्ञानमावृत्याच्छाद्य प्रमादे सञ्जयति प्राप्तज्ञायमानताकस्यार्थस्याज्ञानं जनयतीत्यर्थः, उतापि प्राप्तकर्तव्यताकस्याप्यकरणरूपे आलस्ये तामस्यां च निद्रायां सञ्जयति ॥ ९ ॥

अत्र हेतुमाह—

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥**

रजस्तमश्चेति गुणद्वयमभिभूय तिरस्कृत्य सत्त्वं भवति अदृष्टवशादुद्भवति उत्कर्षं गच्छति, अतः स्वकार्ये सुखादौ सञ्जयति । एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूयोद्भवति, अतः स्वकार्ये कर्मणि सञ्जयति । एवं तमोऽपि सत्त्वरजोगुणावभिभूयोद्भवति, अतः स्वकार्ये प्रमादालस्यादौ सञ्जयति ॥ १० ॥

इदानीमुद्भूतानां गुणानां क्रमाल्लिङ्गान्याह त्रिभिः—

**सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥**

अस्मिन्नात्मनो भोगायतने देहे सर्वेष्वपि द्वारेषु श्रोत्रादिषु यदा शब्दादिज्ञानात्मकः प्रकाश उपजायते, तदा तेन प्रकाशलिङ्गेन सत्त्वं विवृद्धमुद्भूतमिति विद्याज्जानीयात् । उतशब्दात्सुखादिलिङ्गेनापि जानीयादित्युक्तं भवति ॥ ११ ॥

**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥**

लोभः स्वकीयद्रव्यस्यात्यागशीलता । प्रवृत्तिर्नित्यं कुर्वद्रूपता ।

कर्मणामारम्भो महागृहादिनिर्माणोद्यमः । अशमः इदमिदं कृत्वेद-मिदं करिष्यामीति संकल्पप्रवाहानुपरमः । स्पृहा विषयाभिलाषः । एतानि रजसि विवृद्धे जायन्ते । एतैर्लिङ्गै रजोगुणोद्भूतिं जानीया दित्यर्थः ॥ १२ ॥

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥**

अप्रकाशः सत्यपि ज्ञानकारणे ज्ञानानुदयः । अप्रवृत्तिः स्तब्ध-ता । प्रमादः कर्तव्यार्थानुसंधानशून्यत्वम् । मोहो विपरीतज्ञानम् । शेषं सुगमम् ॥ १३ ॥

अथ मरणसमये विवृद्धानां सत्त्वादीनां फलविशेषमाह द्वाभ्याम्—

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।**
**तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥**

**रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥**

सत्त्वे प्रवृद्धे सति यदा देही मृत्युं याति, तदा उत्तमा हिरण्य-गर्भादयः, तद्विदां तदुपासकानां ये अमलाः प्रकाशमया लोका भोगस्थानविशेषाः ; तान्प्राप्नोति । रजसि प्रवृद्धे तु मृत्युं गत्वा कर्मसङ्गिषु कर्माधिकारिषु मनुष्येषु जायते । तमसि प्रवृद्धे सति तु प्रलीनो मृतः मूढयोनिषु पश्वादिषु जायते ॥ १४—१५ ॥

अथ सत्त्वादीनां स्वानुरूपकर्मद्वारेण विचित्रफलहेतुत्वं दर्शयति—

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥**

सुकृतस्य सात्त्विकस्य कर्मणः सात्त्विकं सत्त्वेन निर्वृत्तं निर्मलं प्रकाशबहुलं सुखं फलमाहुर्महर्षयः । रजसो राजसस्य पापमिश्रपुण्यरूपस्य कर्मणः फलं दुःखं दुःखबहुलमल्पसुखमाहुः, कार्यस्य कारणानुरूपत्वात् । तमसस्तामसस्य पापकर्मणः अज्ञानमविवेकपरम्परारूपं दुःखं फलम्, आहुरित्यनुषज्यते । सात्त्विकादिकर्मलक्षणं चाष्टादशे भगवानेव वक्ष्यति । अत्र रजस्तमःशब्दौ तत्कार्यकर्मपरौ, तस्यैव प्रकृतत्वात् । तथा च यथा 'गोभिः श्रीणीत मत्सरम्' इत्यत्र गोशब्दस्तत्प्रभवे पयसि, यथा वा 'धान्यमसि धिनुहि देवान्' इत्यत्र धान्यशब्दस्तत्प्रभवे तण्डुले, तथात्रापि द्रष्टव्यम् ॥

'कर्मणः सुकृतस्याहुः सात्त्विकं फलम्' इत्यादौ हेतुमाह—

**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥**

सर्वकरणद्वारकं प्रकाशरूपं ज्ञानं सत्त्वात्संजायते; अतस्तदनुरूपं सात्त्विकस्य कर्मणः प्रकाशबहुलं सुखं फलं भवति । रजसो लोभो जायते; तस्य च दुःखहेतुत्वाद्राजसस्य कर्मणो दुःखं फलं भवति । तमसस्तु प्रमादमोहाज्ञानानि भवन्ति; अतस्तामसस्य कर्मणस्तामसमज्ञानादिप्रायमेव फलमिति युक्तमेवैतदित्यर्थः ॥ १७ ॥

इदानीं सत्त्वादिवृत्तशीलानां फलभेदमाह—

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।**
**जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥१८॥**

अत्र तृतीये गुणे वृत्तशब्दप्रयोगादाद्ययोरपि वृत्तमेव विवक्षितं गम्यते । तथा च सत्त्वस्थाः सत्त्ववृत्ते शास्त्रीये ज्ञाने कर्मणि च निरता ऊर्ध्वं गच्छन्ति सत्त्वोत्कर्षतारतम्यादुत्तरोत्तरशतगुणानन्दान्मनुष्यगन्धर्वादिसत्यलोकान्तान्देवलोकान्गच्छन्ति । राजसास्तु रजोगुणवृत्ते लोभादिपूर्वके कर्मणि निरताः पुण्यपापमिश्रतया तत्फलभूते मनुष्यलोके जायमाना मध्य एव तिष्ठन्ति, न तूर्ध्वमधो वा गच्छन्ति । जघन्यगुणस्य तमसो वृत्ते निद्रालस्यप्रमादादिरूपे स्थिता अधो निरयान्गच्छन्ति । सात्त्विका राजसा अपि कदाचिज्जघन्यगुणवृत्तस्था भवन्तीति तद्व्यावृत्त्यर्थं तामसा इति विशेषितम् । सर्वदा तमःप्रधाना इत्यर्थः ॥ १८ ॥

तदेवम् 'सत्त्वं रजस्तमः' इत्यारभ्यैतत्पर्यन्तैश्चतुर्दशभिः श्लोकैः के गुणाः कथं वा बध्नन्तीत्यस्योत्तरं प्रपञ्चितम् । इदानीं गुणेभ्यः कथं मोक्षणमित्यस्योत्तरमाह द्वाभ्याम्—

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥**

यदा तु द्रष्टा शास्त्राचार्योपदेशजन्यतत्त्वदर्शनसंपन्नो भूत्वा बु-

द्ध्याकारपरिणतेभ्यो गुणेभ्योऽन्यं कर्तारं नानुपश्यति, किं तु गुणा एव बुद्ध्यादिभावापन्नाः कर्तार इति पश्यति, गुणेभ्यश्च परं व्यतिरिक्तं तत्कार्यासंस्पृष्टं निर्विकारमात्मानमेकं वेत्ति, स द्रष्टा मद्भावं ब्रह्मत्वमधिगच्छति । तादृशात्मतत्त्वज्ञानेनैव गुणेभ्यो मोक्षणमित्यर्थः ॥

एतदेवोपपादयति—

**गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥**

देहसमुद्भवान्देहोत्पत्तिहेतुभूतानेतांस्त्रिगुणानतीत्य तत्त्वज्ञानेन बाधित्वा जन्ममृत्युजरादुःखैर्विमुक्तो जीवन्नेव अमृतं मोक्षं प्राप्नोति ॥

'गुणानेतानतीत्यामृतमश्नुते' इति श्रुत्वा गुणातीतलक्षणं बुभुत्सुः,

**अर्जुन उवाच—**

**कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।**
**किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥**

हे प्रभो स्वामिन्, एतान् त्रीन्गुणानतीतो भवति यः स कैर्लिङ्गैर्ज्ञेयः, तल्लक्षणं किमित्यर्थः । ननु गुणातीतलक्षणं तदीयाचारस्तदीयगुणात्ययोपायसंपत्तिश्चेति स्पष्टमेव, किमत्र पृच्छसीत्याशङ्क्य तदेव पृच्छयत इत्याह— किमाचार इति । क आचारोऽस्येति किमाचारः, कथं च केनोपायेन त्रिगुणानेतानतीत्य वर्तते ॥

तत्र द्वितीयाध्याये 'स्थितप्रज्ञस्य का भाषा' इत्यादिना पूर्वमेव पृष्टमपि 'प्रजहाति यदा कामान्' इत्यादिना दत्तोत्तरमपि पुनर्विशेषबुभुत्सयायं पृच्छतीत्यवधार्य प्रकारान्तरेण तल्लक्षणं पञ्चभिः

**श्रीभगवानुवाच—**

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥**

प्रकाशं सत्त्वकार्यं प्रवृत्तिं रजःकार्यं मोहं च तमःकार्यम् । उपलक्षणमेतत् । सर्वाण्यपि गुणकार्याणि यथायथं संप्रवृत्तानि स्वतः प्राप्तानि सन्ति दुःखबुद्ध्या यो न द्वेष्टि, निवृत्तानि च सन्ति सुखबुद्ध्या यो न काङ्क्षति, स रागद्वेषशून्यो गुणातीत उच्यते इति चतुर्थेनान्वयः ॥ २२ ॥

आचाररूपं लक्षणान्तरमाह—

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥**

यथा हि द्वयोः कलहायमानयोरवलोकयिता तटस्थः केवलमुदास्ते न तु तदीयजयपराजयाभ्यामितस्ततश्चाल्यते, तथैवासीनो यो गुणैः सुखदुःखात्मना परिणतैर्न विचाल्यते, स गुणातीतः । एतदेवोत्तरार्धेन विवृणोति— गुणा इति । गुणा एव स्वकार्येषु प्रवर्तन्ते न त्वहं निर्विकारः; ततो मम न तैः सह संबन्धो-

ऽस्तीति ज्ञानेन तूष्णीमेवावतिष्ठते । अनेन उदासीनवदासीन इत्येतद्विवृतम् । गुणैर्यो न विचाल्यत इत्येतद्विवृणोति— नेङ्गते न चलति, न हर्षविषादाकुलो भवतीति यावत् । अवपूर्वस्य तिष्ठतेः 'समवप्रविभ्यः स्थः' इत्यात्मनेपदविधानादवतिष्ठतीति परस्मैपदमार्षम् । 'यो नु तिष्ठति' इति क्वचित्पाठान्तरमस्तीति भाष्ये लिखितम् ॥ २३ ॥

किं च,

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥२४॥**
**मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥**

हर्षविषादजनकत्वाभावात्समे सुखदुःखे यस्य स तथोक्तः । तत्र हेतुः— स्वस्थः स्वस्मिन्स्वरूप एव निरतिशयानन्दात्मके स्थितः, अत एव हेयोपादेयराहित्यात्समानि लोष्टाश्मकाञ्चनानि यस्य स तथोक्तः, अत एव च तुल्ये प्रियाप्रिये सुखदुःखसाधने यस्य सः । स्वस्थत्वे हेतुः—धीरः धीमान् निर्विशेषाद्वितीयब्रह्मात्मतत्त्वज्ञानवान्, अत एव तुल्यनिन्दात्मसंस्तुतिः विद्याभिजनसंपत्त्यादिगुणतदभावनिबन्धनस्तुतिनिन्दयोर्निर्विशेषशुद्धचिन्मात्ररूपे स्वस्मिन्नसंबन्धानुसंधानेन तुल्यचित्तः, अत एव स्तुतिनिन्दाप्रयुक्तमानावमानयोस्तत्प्रयुक्तमित्रारिपक्षयोश्च स्वसंबन्धाभावादेव तुल्यचित्तः । तथा सर्वारम्भा-

न्सर्वकर्माणि परित्यक्तुं शीलमस्येति तथोक्तः । एवमुदासीनवदासीन इत्याद्युक्तप्रकाराचारलक्षणो यः, स गुणातीत इत्युच्यते ॥२४–२५॥

इदानीं गुणातीतत्वापायनिष्ठारूपं लक्षणान्तरं दर्शयन्नध्यायार्थमुपसंहरति—

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ २६ ॥**

चस्त्वर्थः । यस्तु मां भगवन्तं वासुदेवम् अव्यभिचारेण ऐकान्तिकेन भक्तियोगेन सेवते, स एतान्गुणान्समतीत्य 'नान्यं गुणेभ्यः कर्तारम्' इति प्रागुक्तात्मतत्त्वज्ञानेन सम्यगनायासेनैवोपमृद्य ब्रह्मभूयाय ब्रह्मत्वाय मोक्षाय कल्पते समर्थो भवति । अनेन गुणातीतस्य ब्रह्मभावापत्तिरध्यायार्थ इत्युक्तं भवति ॥ २६ ॥

अथ भगवद्भक्तेर्ब्रह्मभूयप्राप्तिहेतुत्वमुपपादयति—

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥**

'हि यस्माद्ब्रह्मणः प्रतिष्ठा अहम्, यया ईश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्तते सा शक्तिरेवाहं शक्तिशक्तिमतोरनन्यत्वात् । यद्वा ब्रह्मशब्दवाच्यस्य सविकल्पकस्य निर्विकल्पकोऽहं प्रतिष्ठा आश्रयः' इति भाष्यकारोक्तमर्थद्वयम् । 'ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभूतं ब्रह्मैवाहम्, यथा घनीभूतः प्रकाश

एव सूर्यमण्डलं तद्वत्' इति श्रीधराचार्यव्याख्यातोऽर्थः। 'ब्रह्मणः परमात्मनः प्रतिष्ठा पर्याप्तिरहमेव, न मद्भिन्नं ब्रह्म' इति नवीनोक्तोऽर्थः। सर्वथापि ब्रह्मणो हि प्रतिष्ठाहमिति युक्तम्। अमृतस्य मोक्षस्य। कीदृशस्य? अव्ययस्य नाशरहितस्यापि प्रतिष्ठा अहमाश्रयः। मदधीनो मोक्ष इत्यर्थः। तथा शाश्वतस्य नित्यमोक्षफलस्य धर्मस्य ज्ञाननिष्ठारूपस्य प्रतिष्ठाहम्। सोऽपि मदायत्त इत्यर्थः। तस्माद्युक्तमेवोक्तं मद्भक्तो ब्रह्मभूयाय कल्पत इति ॥ २७ ॥

इति श्रीमत्परमहंसपरिव्राजकसार्वभौमश्रीमदद्वैतविद्याप्रतिष्ठापनाभिनवशंकराचार्यसर्वतन्त्रस्वतन्त्रश्रीमद्रामब्रह्मानन्दतीर्थभगवत्पूज्यपादानां शिष्येण श्रीवेङ्कटनाथेन कृते ब्रह्मानन्दगिर्याख्याने भगवद्गीताव्याख्याने चतुर्दशोऽध्यायः ॥



# पञ्चदशोऽध्यायः ॥



चतुर्दशेऽध्याये गुणातीतस्य ब्रह्मभावापत्तिरूपा मुक्तिरुपवर्णिता। पञ्चदशे तु निःसंसारस्य मोक्षवर्णनेन पूर्वाध्यायार्थ एव प्रपञ्च्यते। तत्र संसारतो विरक्तस्यैव निःसंसारत्वं नान्यस्येति ततो विरक्त्यर्थं प्रथमं तावत्संसारस्वरूपं वृक्षत्वेन निरूपयन्,

**श्रीभगवानुवाच—**

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥**

ऊर्ध्वाधःशब्दावुत्कृष्टापकृष्टवाचिनौ। ऊर्ध्वं सर्वसंसारभ्रमाधिष्ठानत्वेन स्वप्रकाशपरमानन्दचैतन्यरूपत्वेन च सर्वोत्कृष्टं परब्रह्म मूलं यस्य संसारवृक्षस्य; यद्वा ऊर्ध्वं क्षराक्षराभ्यामुत्कृष्टं पुरुषोत्तमाख्यं मायाशबलितं ब्रह्म मूलं यस्य तमूर्ध्वमूलम्, 'तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी' इति वक्ष्यमाणत्वात्। अधःशाखम्, ब्रह्मणोऽधस्तना हिरण्यगर्भादयः कार्योपाधयो जीवा महदहंकारतन्मात्रादयो वा नानादिक्प्रसृतत्वाच्छाखा इव शाखा यस्य तमधःशाखम्। अथ वा ऊर्ध्वाधःशब्दावुपर्यधःप्रदेशरूपप्रसिद्धार्थकावेव 'अधश्चोर्ध्वं च प्रसृ-

तास्तस्य शाखाः ' इत्यग्रिमश्लोकानुसारात् । तत्र सप्तलोकोपरिस्थितचतुर्मुखादित्वेन संसारस्योर्ध्वमूलत्वम् । ब्रह्माणमारभ्य हि संसारः प्रवृत्तः, 'स वै शरीरी प्रथमः ' इत्यादिस्मृतेः । एवं भूमिस्थमनुष्यपशुपक्ष्यादिस्थावरान्तत्वेनाधःशाखत्वं च द्रष्टव्यम् । अत्र चोर्ध्वमूलाधःशाखत्वोक्त्या महानदीप्रवाहनिपातिततत्तीरतिर्यङ्निपतिताधोन्मूलितवृक्षत्वरूपणमभिव्यज्यते । तेन च संसारस्यातिजिह्मास्यत्वमाविष्कृतम् । न हि तादृशो वृक्षः पक्षिभिः पथिकैरन्यैर्वा कैश्चिदाश्रीयते, न वा स्वयं चिरं जीवितुमर्हति । अत एव श्वोऽपि न तिष्ठतीत्यश्वत्थमाशुविनाशिनम् । न चायमाशुविनाशीति स्वत एव नश्यति, किं त्वव्ययम्, ज्ञानपरशुं विनानुच्छेद्यमित्यर्थः । एवंविधं संसारं प्राहुः, श्रुतिस्मृतय इति शेषः । तत्र श्रुतयस्तावत्— ' ऊर्ध्वमूलो ह्यवाक्शाख एषोऽश्वत्थः सनातनः ' ' ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रति ' इत्याद्याः । तथा स्मृतयश्च— ' अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः । बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ' इत्याद्याः । यस्य संसारवृक्षस्य च्छन्दांसि ऋग्यजुःसामरूपाणि पर्णानीव पर्णानि । यथा वृक्षस्य रक्षार्थानि पर्णानि भवन्ति तथा संसारवृक्षस्य रक्षणार्थानि कर्मकाण्डात्मकानि छन्दांसि तेषां संसाराभिवृद्धिकरधर्माधर्मप्रतिपादकत्वात् । य एवंभूतमश्वत्थं वेद जानाति, स वेदवित् । संसारवृक्षस्य हि ब्रह्मैव मूलम्, जीवास्तस्य शाखाः ; स च स्वरूपेण विनश्वरो विज्ञानं विनानुच्छेद्यः कर्मभिश्चाभिवर्धते ब्रह्मात्मतत्त्वज्ञानेन च्छिद्यत इत्येतावानेव हि सर्ववेदार्थः । अत ईदृशसंसारवृक्षज्ञानी वेदविदिति युक्तैव स्तुतिः ॥१॥

तस्यैव संसारवृक्षस्याव्ययपदोक्तमनुच्छेद्यत्वमुपपादयति—

**अधश्चोर्ध्वं च प्रसृतास्तस्य शाखा**
**गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसंततानि**
**कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

तस्य जीवशाखत्वेनोक्तस्य संसारवृक्षस्य शाखाः अधश्चोर्ध्वं च प्रसृताः; तत्र ये कपूयचरणा दुष्कृतिनः ते अधः पश्वादियोनिषु प्रसृता विस्तारं गताः शाखाः, ये तु रमणीयचरणाः सुकृतिनः ते ऊर्ध्वं गन्धर्वदेवयक्षादिरूपेण प्रसृताः शाखाः । ताश्च गुणप्रवृद्धाः गुणैः सत्त्वादिवृत्तिभिः जलसेकैरिव प्रवृद्धिं गताः, 'ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः' इत्युक्तेरिति भावः । पुनः कीदृश्यः शाखाः ? विषयप्रवालाः विषयाः शब्दस्पर्शरूपरसगन्धाः प्रवालाः पल्लवस्थानीया यासां ताः । विषयाणां पल्लवत्वं शाखाग्रस्थानीयाभिरिन्द्रियप्रवृत्तिभिः संयुक्तत्वाद्रागाधिष्ठानत्वाच्चेति ध्येयम् । किं च तस्य संसारवृक्षस्य ब्रह्ममूलस्य मनुष्याग्रस्य अधो मनुष्यलोके च मूलान्यनुसंततानि अनुस्यूततया निविडानि । कानि तानि मूलानि ? तत्राह— कर्मानुबन्धीनि पुण्यपापप्रवर्तकतया तदनुबन्धीनि रागद्वेषवासनाजालानीत्यर्थः । मनुष्यलोके हि रागद्वेषाभ्यामाचरितैस्तत्तत्कर्मभिर्देवपश्वादिभावः प्राप्यते । अतो मनुष्यशाखस्यास्य वृक्षस्याग्रभागे-

ऽपि मूलानि प्ररूढानीत्येवमद्भुतः प्रसिद्धवृक्षविलक्षणः प्रबलोऽयमापादमस्तकमविरलप्रवृद्धशाखानुविद्धः संसारवृक्षो दुरुच्छेद इत्यभिप्रायः ॥ २ ॥

प्रकारान्तरेणापि दुरुच्छेदत्वमाह—

**न रूपमस्येह तथोपलभ्यते**
**नान्तो न चादिर्न च संप्रतिष्ठा ।**

इह संसारे स्थितैः प्राणिभिः अस्य संसारवृक्षस्य रूपं ब्रह्ममूलत्वं तत्संतानपरम्परया मनुष्याग्रत्वेनाधःशाखत्वं मनुष्यत्वावस्थायां च कृतैः कर्मभिः पुनरप्यधश्चोर्ध्वं च तस्य प्रसृतशाखत्वमिति यथोक्तं तथा नोपलभ्यते । अत एव नास्यान्तोऽवसानं चोपलभ्यते नाप्यादिः न वा संप्रतिष्ठा स्थितिर्मध्यम्, आद्यन्तप्रतियोगिकत्वान्मध्यस्य । तथा चानुपलभ्यमानस्वरूपतयानवगतादिमध्यावसानस्यास्य वृक्षस्य दुर्घट एवोच्छेद इति भावः ।

यस्मादेवं दुरुच्छेदः सर्वानर्थकरोऽयं संसारवृक्षस्तस्मादेनमुपायेन च्छित्त्वा पुरुषार्थसिद्धये प्रयतितव्यमित्याह सार्धेन—

**अश्वत्थमेनं सुविरूढमूल-**
**मसङ्गशस्त्रेण दृढेन च्छित्त्वा ॥ ३ ॥**

**ततः पदं तत्परिमार्गितव्यं**
**यस्मिन्गता न निवर्तन्ति भूयः ।**

**तमेव चाद्यं पुरुषं प्रपद्ये**
**यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

सुष्ठु विविधं रूढमूलमनाद्यज्ञानेनातिदृढम् एनमश्वत्थम् असङ्गशस्त्रेण, सङ्गः स्पृहा, तद्विरोधि वैराग्यमसङ्गः, पुत्रवित्तलोकैषणात्यागरूपः, स एव शस्त्रं रागद्वेषमयसंसारच्छेदकत्वात्; तेन असङ्गशस्त्रेण दृढेन तत्त्वज्ञाननिष्ठया दृढीकृतेन पुनः पुनर्विवेकाभ्यासनिशितेन च्छित्त्वा, वैराग्यशमदमादिसंपन्नो भूत्वेति यावत् । ततो गुरुमुपसृत्य तत्पदं पद्यते ज्ञायत इति पदं ब्रह्मात्मतत्त्वं परिमार्गितव्यमन्वेष्टव्यम्, 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति श्रुतेः । श्रवणादिना ज्ञातव्यमित्यर्थः । किं तत्पदम्? यस्मिन्पदे गता अभेदेन प्राप्ताः भूयः संसाराय न निवर्तन्ते । तदन्वेषणे च भगवदेकान्तभक्तिरेव कारणमित्याह— तमेवेति । यतः पुरुषादेषा पुराणी चिरंतनी संसारवृक्षप्रवृत्तिः प्रसृता ऐन्द्रजालिकादिव गजादिमाया निःसृता, तमेव चाद्यं पुरुषं प्रपद्ये शरणं व्रजामीत्येवं तदेकशरणतया तत्परिमार्गितव्यमिति योजना ॥ ४ ॥

एवं संसारस्वरूपं ततो विरक्तस्य भगवद्भक्त्या ब्रह्मात्मतत्त्वज्ञानं चोक्त्वा निःसंसारस्य मुक्तिं दर्शयति—

**निर्मानमोहा जितसङ्गदोषा**
**अध्यात्मनित्या विनिवृत्तकामाः ।**

**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-**
**र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥**

निर्गतौ मानमोहावहंकाराविवेकौ येभ्यस्ते, अत एव जितः पुत्रवित्तादिसङ्गरूपो दोषो यैः, अत एव च प्रतिबन्धकाभावाद-ध्यात्म आत्मज्ञाने नित्याः, अत एव 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति प्रागुक्तेर्विषयतो निरवशेषेण निवृत्ताः कामा विषया येभ्यस्ते, तत एव सुखदुःखसंज्ञैर्द्वन्द्वैर्विमुक्ताः, अत एवंविधा अमूढा निवृत्ताज्ञानाः तदव्ययं त्रिविधपरिच्छेदशून्यं पदं गच्छन्ति ॥

तदेव गन्तव्यं पदं विशिनष्टि—

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

यत्पदं गत्वा न निवर्तन्ते तत्पदं सर्वभासकः सूर्यो न भासयते, सूर्यास्तमयेऽपि तस्य भासमानत्वात्, 'अस्तमित आदित्ये किं ज्योतिरात्मैवास्य ज्योतिः' इत्यादिश्रुतेरिति भावः । सूर्यास्तमयेऽपि चन्द्रोऽग्निर्वा तस्य भासकः किं न स्यात्? तत्राह— न शशाङ्को न पावकः, भासयत इत्यनुषङ्गः । चन्द्राग्न्यभावेऽपि भासमानत्वान्न तद्भास्यत्वमपीत्यर्थः । तर्हि केनाप्यभास्यत्वे वेदितुमेवाशक्यत्वादपुरुषार्थत्वप्रसङ्ग इत्यत आह— तद्धामेति । मम परब्रह्मणः स्वरूपभूतं तत्परममुत्कृष्टं धाम ज्योतिः स्वयं प्रकाशरूपम् 'न तत्र सूर्यो

भाति' इत्यादिश्रुतेः । तथा च सूर्यादिप्रकाशान्तराप्रकाश्यत्वेऽपि स्वप्रकाशतया स्वत एवापरोक्षत्वान्नापुरुषार्थत्वशङ्केति भावः । अत्र पूर्वार्धे अवेद्यत्वस्य तद्धाम परममिति स्वतो नित्यापरोक्षत्वस्य च प्रतिपादनादवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वरूपं स्वप्रकाशत्वलक्षणमुक्तं भवति ॥ ६ ॥

ननु 'यद्गत्वा न निवर्तन्ते' इत्युक्तमयुक्तम्, गन्तुर्जीवस्य गन्तव्यब्रह्माभिन्नत्वे गन्तृगन्तव्यभावासंभवेन गत्वेत्युक्तेरयोगात्; तद्भिन्नत्वे तु 'संयोगा विप्रयोगान्ताः' इति शास्त्रेण संयोगस्य वियोगान्तत्वोक्त्या स्वर्गतस्येव ब्रह्मगतस्यापि ततो विनिवृत्त्यवश्यंभावेन 'न निवर्तन्ते' इत्युक्तेरयोगादित्याशङ्कयाह—

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

सुरनरतिर्यगादिरूपेणोपलभ्यमानेऽस्मिन्नुच्चावचे जीवलोके जीवभूतो जीवभावं प्राप्तः तत्तच्छरीरेषु जायमानेषु नश्यत्सु च स्वयं सनातनो नित्यः प्रथमषट्के निरूपितो योऽयमात्मा, स ममैव परब्रह्मणोंऽशो न तु मद्भिन्न इत्यर्थः । अयं भावः— ब्रह्माभिन्न एव जीवः; न चैवं तस्य ब्रह्मप्राप्त्ययोगः, प्राप्तप्राप्तिरूपत्वात्तस्याः । द्विविधा हि प्राप्तिः— अप्राप्तप्राप्तिः प्राप्तप्राप्तिश्च । आद्या यथा देवदत्तस्य ग्रामप्राप्तिः । अन्त्या यथा कण्ठचामीकरादिप्राप्तिः । कण्ठ एव स्थितस्य चामीकरस्य भ्रमवशादप्राप्तवत्स्थितस्य तन्निवृत्त्या प्राप्ति-

रिव भवतीति भ्रमनिवृत्तिमात्रेण तत्र प्राप्तिव्यवहारः । एवं चात्र जीवस्य ब्रह्मप्राप्तिः किमप्राप्तप्राप्तिरूपा किं वा प्राप्तप्राप्तिरूपेति विशये, 'ब्रह्मैव सन्ब्रह्माप्येति' 'विमुक्तश्च विमुच्यते' इत्यादिश्रुतिभिरेव प्राप्तप्राप्तिरूपेति निर्णीतम् । उपबृंहितं च पुराणैः— 'नित्यप्राप्तस्य चाप्राप्तिर्विभ्रमः खलु देहिनाम् । विभ्रमस्य निवृत्त्या सा प्राप्तेति व्यपदिश्यते' इत्यादिसूतसंहिताद्युक्तेः । युक्तं चैतत्, ब्रह्मस्वरूपतया नित्यप्राप्तब्रह्मभावस्यैव सतो जीवस्य तद्भावप्राप्तेस्तदज्ञाननिवृत्तिमात्ररूपत्वौचित्यात् । उक्तं च भगवतात्रापि— 'स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति' इति । अतो ब्रह्मांशतया ब्रह्मभूतस्यापि जीवस्य तत्प्राप्तिरविरुद्धैवेति । अत्र च जीवस्य ब्रह्मांशत्वं नाम घटाकाशस्य महाकाशं प्रतीव तदेकदेशत्वम् । तच्च निरंशे ब्रह्मणि वास्तवं न भवतीति कल्पितमेव । तथा च ममैवांश इत्यत्र अंश इवांश इत्यर्थः । विस्तरस्त्वद्वैतवज्रपञ्जरे द्रष्टव्यः । नन्वस्तूक्तरीत्या ब्रह्माभिन्नस्यापि तद्भावप्राप्तिः; तथापि 'यद्गत्वा न निवर्तन्ते' इत्ययुक्तम्, 'सता सोम्य तदा संपन्नो भवति' इतिश्रुत्युक्तायाः सुषुप्तौ ब्रह्मप्राप्तेः पुनरावृत्तिदर्शनात्, अन्यथा सुप्तस्य मुक्तत्वे पुनरुत्थानायोगादित्याद्याशङ्कामुत्तरार्धेन परिहरति— मनःषष्ठानीति । अयं जीवभूतः प्रकृतिस्थानि सुषुप्तिकाले प्रकृतावज्ञाने लीनतया स्थितानि मनः षष्ठं येषां तानि चक्षुरादीन्द्रियाणि पुनर्भोगार्थमाकर्षति । अयं भावः— अज्ञानवत एव सुषुप्तौ ब्रह्मभावावाप्तिः, 'सर्वाः प्रजा अहरहर्गच्छन्त्य एव ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्यूढाः' इति श्रुतेः, अतश्च जाग्रद्भोगजनकक-

र्मोदयवशात्पुनरुत्थितस्याज्ञानविलीनेन्द्रियाकर्षणरूपा संसारपुनरावृत्तिर्युक्ता ; ज्ञानिनस्त्वज्ञाननिवृत्त्या ब्रह्मभावं प्राप्तस्य कारणाभावात्तदयोग इति ॥ ७ ॥

'मनःषष्ठानीन्द्रियाणि कर्षति' इत्युक्तम् । तत्र कदा कर्षतीत्यत्राह—

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥**

ईश्वरो देहेन्द्रियादिस्वामी जीवः यद्यदा प्रबोधे शरीरमवाप्नोतीति, 'सुषुप्तिकाले सकले विलीने' इति शरीरस्य सुषुप्तावसत्प्रायत्वात्सुप्तोत्थितस्य शरीरावाप्त्युक्तिः । यदा चोत्क्रामति अस्माच्छरीराद्बहिर्निर्गच्छति, तदा एतानि मनःषष्ठानीन्द्रियाणि गृहीत्वा संयाति गच्छति, यथा वायुः स्रक्चन्दनकस्तूरिकाद्याश्रयाद्गन्धान्गन्धात्मकान्सूक्ष्मानंशान्गृहीत्वा याति तद्वत् ॥ ८ ॥

किमर्थमेतानीन्द्रियाणि गृहीत्वा गच्छति ? तत्राह—

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

अयं जीवः श्रोत्रादीनि बाह्येन्द्रियाणि मनश्चान्तरिन्द्रियं चकारात्कर्मेन्द्रियाणि प्राणांश्चाधिष्ठाय विषयाञ्शब्दादीनुपसेवते भुङ्क्ते ॥

नष्ट उच्छिन्नो मोहोऽज्ञानकृतो विपर्ययः । तन्नाशकमाह— स्मृतिर्लब्धा त्वत्प्रसादान्मया, यस्मात्त्वदुपदेशादात्मज्ञानं लब्धं सर्वसंशयानाक्रान्ततया प्राप्तम् अतः सर्वप्रतिबन्धशून्येनात्मज्ञानेन मोहो नष्ट इत्यर्थः । हे अच्युत, आत्मत्वेन निश्चितत्वात् । वियोगायोग्यस्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति श्रुत्यर्थमनुभवन्नाह— स्थितोऽस्मि गतसंदेहः निवृत्तसंदेहः स्थितोऽस्मि युद्धकर्तव्यतारूपे त्वच्छासने ; यावज्जीवं च करिष्ये वचनं तव भगवतः परमगुरोराज्ञां पालयिष्यामीति प्रयाससाफल्यकथनेन भगवन्तमर्जुनः परितोषयामास । अनेन गीताशास्त्राध्यायिनो भगवत्प्रसादादवश्यं मोक्षफलपर्यन्तं ज्ञानं भवतीति शास्त्रफलमुपसंहृतम् 'तद्धास्य विजज्ञौ' इतिवत् ॥ ७३ ॥

'समाप्तः शास्त्रार्थः ; कथासंबन्धमिदानीमनुसंदधानः

**संजय उवाच—**

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥**

अद्भुतं चेतसो विस्मयाख्यविकारकरं लोकेष्वसंभाव्यमानत्वात् , रोमहर्षणं शरीरस्य रोमाञ्चाख्यविकारकरम् । तेनातिपरिपुष्टत्वं विस्मयस्य दर्शितम् । स्पष्टमन्यत् ॥ ७४ ॥

'व्यवहितस्यापि भगवदर्जुनसंवादस्य श्रवणयोग्यतामात्मन आह–

**व्यासप्रसादाच्छ्रुतवानिमं गुह्यमहं परम् ।**
**योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥**

व्यासदत्तदिव्यचक्षुःश्रोत्रादिलाभरूपाद्व्यासप्रसादादिमं परं गुह्यं योगं योगाव्यभिचारिहेतुं संवादं योगेश्वरात्कृष्णात्स्वयं स्वेन पारमेश्वरेण रूपेण कथयतः साक्षादेवाहं श्रुतवानस्मि न परंपरयेति स्वभाग्यमभिनन्दति । अत्र 'इमम्' इति पुंलिङ्गपाठो भाष्यकारैर्व्याख्यातः । 'एतत्' इति नपुंसकलिङ्गपाठस्यैव योगशब्दसामानाधिकरण्येन व्याख्यानमिदमिति तद्व्याख्यातारः ॥ ७५ ॥

**राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**

'पुण्यं श्रवणेनापि सर्वपापहरं केशवार्जुनयोरिमं संवादमद्भुतं न केवलं श्रुतवानस्मि, किं तु संस्मृत्य संस्मृत्य । संभ्रमे द्विरुक्तिः । मुहुर्मुहुः वारं वारं हृष्यामि च हर्षं प्राप्नोमि च, प्रतिक्षणं रोमाञ्चितो भवामीति वा ॥ ७६ ॥

'यद्विश्वरूपाख्यं सगुणं रूपमर्जुनाय ध्यानार्थं भगवान्दर्शयामास, तदिदानीमनुसंदधान आह—

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥**

तदिति विश्वरूपम् । हे राजन्मम महान्विस्मयः । अत एव हृष्यामि चाहम् । स्पष्टमन्यत् ॥ ७७ ॥

'एवं च सति स्वपुत्रे विजयादिसंभावनां परित्यजेत्याह—

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥**

यत्र यस्मिन्युधिष्ठिरपक्षे योगेश्वरः सर्वयोगसिद्धीनामीश्वरः सर्वज्ञः सर्वशक्तिर्भगवान्कृष्णो भक्तदुःखकर्षणस्तिष्ठति नारायणः, यत्र पार्थो धनुर्धरः यत्र गाण्डीवधन्वा तिष्ठत्यर्जुनो नरः, तत्र नरनारायणाधिष्ठिते तस्मिन्युधिष्ठिरपक्षे श्रीः राज्यलक्ष्मीः विजयः शत्रुपराजयनिमित्त उत्कर्षः भूतिरुत्तरोत्तरं राज्यलक्ष्म्या विवृद्धिः ध्रुवा अवश्यंभाविनीति सर्वत्रान्वयः । नीतिर्नयः । एवं मम मतिर्निश्चयः । तस्माद्वृथा पुत्रविजयाशां त्यक्त्वा भगवदनुगृहीतैर्लक्ष्मीविजयादिभागिभः पाण्डवैः सह संधिरेव विधीयतामित्यभिप्रायः ॥ ७८ ॥

इति श्रीमत्परमहंसपरिव्राजकसार्वभौमश्रीमदद्वैतविद्या-
प्रतिष्ठापनाभिनवशंकराचार्यसर्वतन्त्रस्वतन्त्रश्रीम-
द्रामब्रह्मानन्दतीर्थभगवत्पूज्यपादानां शिष्येण
श्रीवेङ्कटनाथेन कृते ब्रह्मानन्दगिर्याख्याने
भगवद्गीताव्याख्याने अष्टादशोऽध्यायः ॥

